अथ यात्रा-प्रकरणम् ।

तत्र प्रशंसा । भविष्ये—

"वृथा कुलं वृथा विद्या वृथा यज्ञो वृथा तपः ।
वृथा दानादि तस्येह कलौ गङ्गां न याति यः ॥"

भविष्ये—"गङ्गा-स्नान-समायुक्तो[1] विधिना स्व-गृहात्ततः ।
निर्गत्य मध्ये च नरः कुदेशे[2] म्रियते यदि ।
गङ्गा-स्नान-फलं सोऽपि नियतात्मा लभेत्तदा[3] ॥"

विधिना यथोक्त-प्रकार-विधि-कृतया[4] । वराह-ब्रह्माण्डयोः—

"अघर्मादिकं गृहीत्वा तु सेन्द्रा देवाः समासते ।
आगच्छन्ति कदेत्यार्यां गङ्गामभिमता नराः[5] ॥"

भविष्ये—"पितरो योगिनश्चैव गाथां गायन्ति सर्वदा ।
अपि नः स्व-कुले कश्चिद् गङ्गा-स्नायी भविष्यति ॥
देवेभ्यश्च पितृभ्यश्च यो दद्यात् स-तिलं जलम् ।
तरित्वा पाप-संघातान् स याति परमां गतिम् ॥"

स्कान्दे—"क्रन्दन्ति सर्व-पापानि संभ्रान्ताः[6] सर्व-पातकाः ।
अनिष्टानि पलायन्ते गङ्गा-स्नानोद्यतस्य वै[7] ॥"

भविष्ये—"अनुषङ्गेण सङ्गेन वाणिज्येन च सेवया ।
कामासक्त्यापि हि नरो गङ्गां प्राप्य दिवं व्रजेत् ॥"

---

1. A. समुद्युक्त । 2. C. तद्देशे ।
3. लभेत् is an आर्षप्रयोग । 4. C. विधि-कृत-यात्रया ।
5. B. भविष्ये । अत्र दानेन—गङ्गामभिमता नराः not found.
6. B. संत्रस्ताः ।
7. Cp. SkandP., Kāśī-khaṇḍa, chap. 27, v. 43, p. 2217
"पापानि च रुदन्त्याशु हा क्व यास्याम इत्वलम् ।
लोभ-मोहादिभिः सार्धं मन्त्रयन्ति पुनः पुनः ॥

अथ यात्रायां कर्तव्य-कर्म[1] ।

तत्र स्कान्द-धृते महाभारतीये—

"ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम् ।
फलञ्चैव तथा प्रोक्तं प्रेत्य चेह च सर्वशः ॥
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं[2] महीपते ।
बहूपकरणा यज्ञा नाना-सम्भार-विस्तराः ॥
प्राप्यन्ते पार्थिवैरेव समृद्धैर्वा नरैः क्वचित् ।
नार्थ-पूर्णैरव-गणैरेकात्मभिरसंहतैः ॥
यो दरिद्रै रपि विधिः शक्यः कर्तुं नरेश्वर ।
तुल्यो यज्ञ-फलैः पुण्यैस्तन्निबोध युधांवर ॥
ऋषीणां परमं गुह्यमिदमुक्तं मया तव ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥
अनुपोष्य त्रि-रात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो जायते नरः ॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुल-दक्षिणैः ।
न तत् फलमवाप्नोति तीर्थाभिगमनेन यत्[3] ॥"[4]

तथा—"अज्ञानेनापि यस्येह तीर्थ-यात्रादिकं भवेत् ।
सर्व-काम-समृद्धः स स्वर्ग-लोके महीयते ॥
स्थानञ्च लभते नित्यं धन-धान्य-समाकुलम् ।
ऐश्वर्य-ज्ञान-सम्पूर्णः सदा भवति भोगवान् ॥
तारिताः पितरस्तेन नरकात् प्रपितामहाः ।"

---

1. A. तीर्थ-विध्यादीनाह ; C. कर्तव्य-कर्म-तीर्थ-विध्यादीनाह ।
2. C. कर्तुम् ।
3. B. अथ यात्रायां कर्तव्यं कर्म···तीर्थाभिगमनेन यत् not found.
4. MahBh., 3.82 13-19.

अव-गणैः सहाय-रहितैः। एकात्मभिः पत्नी-विरहितैः। असंहतैः मिलन-शून्यैः। अनुपोष्येति, तेन त्रिरात्रोपोषण-तीर्थाभिगमन-काञ्चन-गो-दानानां चतुर्णामपि प्रत्येकं दारिद्र्याभावः फलमित्यर्थः। तथा ब्रह्माण्डे—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्तिश्च स तीर्थ-फलमश्नुते॥"

हस्त-संयमनं पर-स्व-ग्रहण-निवृत्त्या। पाद-संयमनम् अगम्य-देश-गमन-निवृत्त्या। मनः-संयमनं कुत्सितेच्छा-निवृत्त्या। विद्या तीर्थ-गुणादि-ज्ञानम्। तपः तीर्थ-निवासादि-लक्षणम्। कीर्तिः सच्चरितत्वेन प्रसिद्धिः। तथा—

"प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित्।
अहङ्कार-विमुक्तश्च स तीर्थ-फलमश्नुते॥
अ-कल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः।
विमुक्तः सर्व-सङ्गैश्च स तीर्थ-फलमश्नुते[1]॥"

प्रतिग्रहादपावृत्तः तीर्थ-यात्रानन्तरमेव, यात्रामुपक्रम्यैवाभिधानात्। अ-कल्कः दम्भ-रहितः। निरारम्भः अर्थार्जनादि-व्यापार-रहितः। सर्व-सङ्गः इति, सङ्गोऽत्र अविहितासक्तिः। तथा—"अकोपनश्च राजेन्द्र सत्य-वादी दृढ-व्रतः।
आत्मोपमश्च भूतेषु स तीर्थ-फलमश्नुते[2]॥"

आत्मोपमः इति सर्व-भूत-हिते रतः इत्यर्थः।
"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्तिश्च स तीर्थ-फलमश्नुते॥"

---

1. MahBh., 3. 82. 10-11. 2. Op. cit., 3. 82. 12.

इदन्तु हस्त-संयमनादिकं तीर्थ-स्नानादि-कर्माङ्गं यात्रामुपक्रम्यैवाभिधानात्। तथा—

"तीर्थान्यनुस्मरन् धीरः श्रद्दधानः समाहितः।
पापात्मापि विशुध्येत किं पुनः शुभ-कर्मकृत्॥
तिर्यग्-योनिं न गच्छेत कु-देशे नैव जायते।
स्वर्गीभवति विप्रेन्द्रो मोक्षोपायञ्च विन्दति॥
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्न-संशयः।
हेतु-निष्ठश्च पञ्चैते न तीर्थ-फल-भागिनः॥"

पापात्मा बहु-पाप-ग्रस्तः, तस्य तु बहु-पाप-शमनं तीर्थं भवति, न तु यथोक्त-फलम्। तदुक्तम्—

"नृणां पापकृतां तीर्थं पापस्य शमनं भवेत्।
यथोक्त-फलदं तीर्थं भवेच्छुद्धात्मनां नृणाम्॥"

अच्छिन्न-संशयः फलोपायेतिकर्तव्यता-निश्चय-शून्यः। हेतु-निष्ठः कु-तर्केण शास्त्रोपप्लावकः।

भारते—"कामं क्रोधञ्च लोभञ्च यो जित्वा तीर्थमाविशेत्।
तेन किञ्चिदनप्राप्तं तीर्थाभिगमनाद् भवेत्॥
तीर्थानि च यथोक्तेन विधिना सञ्चरन्ति ये।
सर्व-द्वन्द्व-सहा धीरास्ते नराः स्वर्ग-गामिनः॥"

सर्व-द्वन्द्व-सहाः शीतातपादि-क्लेश-सहिष्णवः। ब्रह्म-पुराणे—

"गङ्गादि-तीर्थेषु वसन्ति मत्स्या देवालये पक्षि-गणा वसन्ति।
भावोज्झितास्ते न फलं लभन्ते तीर्थाच्च देवायतनाच्च मुख्यात्॥
भावं ततो हृत्-कमले निधाय तीर्थानि सेवेत समाहितात्मा।
या तीर्थ-यात्रा कथिता मुनीन्द्रैः कृता प्रयुक्ता ह्यनुमोदिता च॥
तां ब्रह्मचारी विधिवत् करोति सुसंयतो गुरुणा सन्नियुक्तः।
सर्वस्व नाशेऽप्ययथवान्य-पक्षे स ब्राह्मणानशत एव कृत्वा॥

यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि परिग्रहेत ।
तीर्थं कृतं यज्ञ-फलञ्च यस्मात् प्रोक्तं मुनीन्द्रैरमल-स्वभावैः ॥
यस्येष्टि-यज्ञेष्वधिकारितास्ति वरं गृहं गृह-धर्मांश्च सर्वे ।
एवं गृहस्थाश्रम-संस्थितस्य तीर्थं गतिः पूर्वतरैर्निषिद्धा ॥
सर्वाणि तीर्थान्यपि चाग्निहोत्र-तुल्यानि नैवेति वयं वदामः ।"

ब्रह्मचारीत्यादि, ब्रह्मचारिणो निरग्निहोत्रस्य गृहस्थस्य च तीर्थ-गमनेऽधिकारः । साग्नेस्तु निरधिकारः[1] इति वस्तुतार्थः ।
"यो यः कश्चित्तीर्थ-यात्रान्तु गच्छेत् सुसंयतः स च पूर्वं गृहे स्वे ।
कृतोपवासः शुचिरप्रमत्तः सम्पूजयेद् भक्ति-नम्रो गणेशम् ॥
देवान् पितॄन् ब्राह्मणांश्चैव साधून् सन्तर्पयेद्वित्त-शक्त्या प्रयत्नात् ।
प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥

एवन्तु कुर्वतस्तस्य तीर्थाद् यदुक्तं फलं तत् स्यान्नात्र सन्देहोऽस्ति । सुसंयत इति पूर्व-दिन-कृतैक-भक्तादि-नियमः । तदुत्तर-दिने कृतोपवासः गणेशं ग्रहानिष्ट-देवताश्च संपूज्य पार्वणञ्च कृत्वा ब्राह्मणान् पूजयेत् । इदञ्च पार्वणं घृत-प्रचुरकम्[2] ।

"गच्छन् देशान्तरं यस्तु श्राद्धं कुर्वीत सर्पिषा ।
यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः" ॥

इति भविष्य-पुराण-वचनात् । इदमाभ्युदयिकमिति केचित् । तन्न ; प्रकृतित्वेन उपस्थितेरारब्धत्वात् प्राप्तं पार्वणं विशेषानभिधानात् । गणेश्वर-मिश्रादयोऽप्येवम् । उपवास-दिने मुण्डनमपि, तथाच—"प्रयागे तीर्थ-यात्रायां पितृ-मातृ-वियोगतः ।
कचानां वपनं कार्यं वृथा न विकचो भवेत् ॥"

इति स्मृति-समुच्चय-लिखित-वचनात् । कार्पट-वेशेन तीर्थ-

1. A. अनधिकारः । 2. Op. cit., घृत-मुख्य-द्रव्यम् ।

गमने चिकीर्षिते श्राद्धे वपनमित्यर्थः। श्राद्धानन्तरञ्च गमन-संकल्पः। ततो वेश-धारणम्। तदुक्तं वायु-पुराणे—

"उद्यतश्चेद् गयां गन्तुं श्राद्धं कृत्वा विधानतः।
विधाय कार्पटं वेशं कृत्वा ग्रामप्रदक्षिणम्॥
ततो ग्रामान्तरं गत्वा श्राद्ध-शेषस्य भोजनम्।
ततः प्रदक्षिणं गच्छेत् प्रतिग्रह-विवर्जितः[1]॥
पदे पदेऽश्वमेधस्य स्यात् फलं गच्छतो गयाम्[2]॥"

इदञ्च कार्पट-वेश-धारणं गणेशं ग्रहानिष्ट-देवताश्च सम्पूज्य। गमन-फलञ्च यद्यपि गयायामेव श्रूयते, तथापि तीर्थान्तर-यात्रायामपि द्रष्टव्यम्, "एकत्र निर्णीत" इति न्यायात्। फलाकाङ्क्षायाञ्च गमन-फलत्वेन श्रुतस्याश्वैवान्यत्रापि गमन-फलत्वमुचितमन्तरङ्गत्वात्, न तु विश्वजिन्न्यायात् अन्यत्रान्य-फल-कल्पनं, तस्य बहिरङ्गत्वेन उपस्थितौ गौरवात्। ग्रामान्तरन्तु क्रोशाभ्यन्तरमेव, अध्वनि च क्रोश-पूरणे इत्यादिना श्राद्धोत्तरं क्रोश-गमन-निषेधात्। मात्स्ये मार्कण्डेय-वाक्यम्—

"कथयिष्यामि ते वत्स तीर्थ-यात्रा-विधि-क्रमम्।
आर्षेणैव विधानेन यथादृष्टं यथाश्रुतम्॥
बलीवर्द-समारूढः शृणु तस्यापि यत् फलम्।
नरके वसते घोरे गवां क्रोधो हि दारुणः॥
सलिलञ्च न गृह्णन्ति पितरस्तस्य देहिनः।
ऐश्वर्य-लाभ-माहात्म्याद् गच्छेद् यानेन यो नरः।
निष्फलं तस्य तत्तीर्थं तस्माद् यानं विवर्जयेत्[1]॥"

---

1. VāyP., 110, 2-3, & 742.
2. Op. cit., this line omitted.

यच्च यान-निषेधः प्रयाग-मात्र-परः तत्-प्रकरण एव मत्स्य-पुराणे[1] पठितत्वादिति कल्पतरुः । पठन्ति च—

"गो-याने गो-वधः प्रोक्तो हय-याने तु निष्फलम् ।
नरयाने तदर्धं स्यात् पद्भ्यां तच्च चतुर्गुणम् ॥"

पद्भ्यामित्युपानदादि-व्यतिरेकेणास्यातिशयं तीर्थ-फलं, न तु तत्-परिधाने दोषः निषेधाश्रवणात्, मिताक्षरा-स्वरसोऽप्येवम् । यत् "अर्धं हरति पादुके"ति पठन्ति, तत् सर्वैरेव निबन्ध-कारैरनादरणादनाकरमिति निर्णीयते । एवं व्रजत उपानन्निषेधे बाधिते—

"वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च ।
शरीर-त्राण-कामो वै सोपानत्कः सदा व्रजेत् ॥"

इति विष्णु-पुराणीय[2]-वचनेन निष्प्रतिपक्ष-सदा-शब्द-स्वरसात्तीर्थ-यात्रायामप्युपानत्-परिधानमावश्यकमिति । एवं वर्षास्वपि । यत्तु वर्षासु तन्निषेधः, स तदाऽष्टकादि-निषेधवत् काम्य इति ।

तदयमत्रानुष्ठान-क्रमः—एकस्मिन् दिने एक-भक्तादिकं कृत्वा उत्तर-दिनेऽधिकारि-विशेषत्वेन प्राप्तं मुण्डनमुपवासञ्च कृत्वा तदुत्तर-दिने कृत-नित्य-क्रियो गणेशं पूजयित्वा यथाभिष्ट-देवताश्च सम्पूज्य—"ओं अद्य तीर्थ-यात्रायां पार्वण-श्राद्धमहं करिष्ये" इति सङ्कल्प्य घृतेन श्राद्धं कृत्वा ब्राह्मण-त्रयं सम्पूज्य हिरण्यादिना परितोष्य "ओं अद्य प्रतिपदाश्वमेध-जन्य-फल-सम-फल-प्राप्ति-कामोऽमुक-तीर्थ-यात्रामहं करिष्ये" इति सङ्कल्प्य तत्रैव मुद्राकङ्कण-कषाय-परिधान-रूपं कार्पटि-वेशं कृत्वा ग्रामं

1. MatP., 106, 3-b, p. 315.
2. VisP., 3. 12. 38.

वासावच्छिन्नं प्रदक्षिणं परिक्रम्य क्रोशाभ्यन्तरस्थं ग्रामान्तरं गत्वा श्राद्ध-शेष-घृतेन पारणं कुर्यात्। ततो दिनान्तरे प्रातः शुचि-वस्त्र-युगलेन कृत-स्नानो गृही कर्पटि-वेशः पूर्वाह्णे तीर्थाभिमुखं गच्छेत्। वेश-धारणन्तु यात्राङ्गत्वाद् गमन-काल एव, न त्वाह्निक-भोजनादि-कालेऽपि प्रमाणाभावात्। एवमेव यावत्तीर्थ-प्राप्ति प्रत्यहं गच्छेत्। तीर्थेऽपि तत्तीर्थसेवादिकमनुसरन् कर्पटि-वेशं बिभृयात्, न तु तत्र स्नान-श्राद्धादि-काले, प्रमाणाभावात्। एवं तीर्थात् तथैव प्रत्यावृत्तः स्वग्राम-समीपे ग्रामान्तरे तत्-प्राप्ति-दिने कृतोपवास-स्तदुत्तर-दिने यथाभिष्ट-देवताश्च सम्पूज्य "ओं अद्य तीर्थ-यात्रानन्तरं गृह-प्रवेशार्थं घृतेन पार्वण-श्राद्धमहं करिष्ये" इति सङ्कल्प्य तत्रैव घृतेन पार्वणं कृत्वा ब्राह्मण-त्रयं पूजा-पूर्वकं हिरण्यादिना सन्तोष्य पूर्ववद् भोजयित्वा स्व-ग्रामं प्राप्य तं पूर्ववत् प्रदक्षिणीकृत्य स्व-गृहं प्रविश्य वेश-धारण-स्थाने वेशं त्यक्त्वा श्राद्ध-शेषेण घृतेन पारणं कुर्यात्।

शङ्खः—"तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे[1] समाचरन्।
स स्नान-फलमाप्नोति तीर्थ-यात्रा-फलं न तु॥"

अनुषङ्गेण विदेशस्थ-पित्रादि-प्रणामाय चलितो मध्ये तीर्थं प्राप्य स्नात्वा स्नान-जन्य[2]-फलमेव।

पैठीनसिः—"षोडशांशं स लभते यः परार्थेन गच्छति।
अर्द्ध-तीर्थ-फलं तस्य यः प्रसङ्गेन गच्छति॥"

परार्थेन अन्न-वेतनादिना। प्रसङ्गेन उद्देश्य-तीर्थान्तर-प्रसङ्गेन। गणेश्वर-मिश्रादयोऽप्येवम्।

---

1. A. तीर्थ-स्नान। 2. A. ततः।

भविष्ये—"बहुनाऽत्र किमुक्तेन गङ्गायाश्चैव[1] भक्तितः ।
महापातकिनो ये वा गमनाद् ब्रह्म-लोकगाः ॥"

अद्य महा-पातक-क्षय-पूर्वक-ब्रह्म-लोक-गमन-कामो गङ्गामहं गमिष्यामि[2] ।

ब्राह्मे—"स्नानन्तु भक्त्या गङ्गायां कर्त्तुं कामस्य गच्छतः ।
पदे पदेऽश्वमेधस्य फलं मर्त्त्यस्य जायते ॥"

अद्य प्रतिपदाश्वमेध-यज्ञ-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानं कर्त्तुमहं गमिष्यामि । भक्तिरत्र गङ्गायाम् ।

ब्रह्माण्डे—"स्नानं भक्त्या तु गङ्गायां मौनः[3] कर्त्तुं हि गच्छति[4] ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयः ॥"

वाक्ये तु पूर्व्वस्मान्मौनेनेति[5] विशेषः ।

भविष्ये—"तेषां न परिवर्त्तोऽस्ति कल्प-कोटि-शतैरपि ।
ये पुनस्त्यक्त-दम्भाश्च गङ्गां ध्यायन्ति यान्ति च ॥"

अद्य ब्रह्म-लोकाधि-करणक-बहु-कल्प-कोटि-शतावच्छिन्न-वासैतत्-पुराधिकरणक-पुनः-परिवर्त्ताभाव-कामस्त्यक्त-दम्भो गङ्गामहं यास्यामि । ध्यानेऽप्येतदेव फलम् । अशक्तानान्तु गङ्गागमने तच्चिन्तायां सर्व्व-पाप-विमुक्ति-पूर्व्वक-ब्रह्म-लोक-प्राप्तिः फलम् ।

तथा च स्कान्दे—

"गङ्गा-स्नानं करोमीति मनसा यस्तु चिन्तयेत् ।
अशक्तश्च स्वयं गन्तुं सामग्री यस्य नास्ति च ॥

---

1. A. गङ्गायाश्चैक-भक्तितः ।
2. A. पश्यामि ।
3. A. मौनात् ।
4. A. गच्छतः ।
5. A. मौनेनात (?) ।

स तया[1] श्रद्धया भक्त्या विमुक्तः सर्व-पातकैः ।
ब्रह्म-लोकं समाप्नोति देहान्ते नास्ति विस्मयः ॥"

सामग्री[2] सम्बल-यानादीनि । स्वयं गन्तुम् अशक्तः जरा-देह-मान्द्यादि-व्याप्तः ।

ब्रह्माण्डे—"ये गच्छन्ति स्वतो गङ्गां सर्वांश्च प्रेरयन्ति ये ।
इह ते सर्व-भोगानामन्ते स्नानस्य भाजनम् ॥"

अयं चैहिक-बहु-सर्व-भोगोत्तरान्त-कालिक-स्नान-भाजनत्व-कामो गङ्गामहं गमिष्यामि । गङ्गा-गमनं प्रति पर-प्रेरणेऽपि तदेव फलम् ।

भविष्ये—"गच्छध्वं हि बुधा गङ्गां ज्ञात्वा विश्वमशाश्वतम् ।
सुघोरेऽपि कलौ प्राप्ते मुक्तिर्वा वाञ्छिता यदि ॥"

अद्य मुक्ति-कामो गङ्गामहं गमिष्यामि ।

दान-धर्मे—"गङ्गां गता ये त्रिदिवं गतास्ते ।"

अद्य त्रिदिव-गमन-कामो गङ्गामहं गमिष्यामि ।

अथ यात्रायां विहिताविहितानि[3] ।

भविष्ये—"तीर्थं गच्छंस्त्यजेत् प्राज्ञः परान्नं पर-भोजनम् ।
जितेन्द्रियो जितक्रोधो ब्रह्मचारी भवेच्छुचिः ॥"

परान्न-पर-भोजन[4]-गमनात्तीर्थस्य षोडशांश-फल-प्राप्ति-श्रवणात् परान्नं त्यजेत् । तथा च—

स्कान्दे—"षोडशांशं स लभते यः परान्नेन गच्छति ।"

तीर्थ-गमन-निमित्त-परान्न-ग्रहणं न कर्तव्यम् इति तात्पर्यम् । पर-भोजनं पर-हस्त-भोजनं स्व-स्त्रिया विनेति । तथा च

1. A. तथा ।
2. A. सहायः ।
3. This chapter is not found in B.
4. A. भोजने ।

पाद्मे—"परान्नं पर-वासश्च नित्यं धर्म-रतस्त्यजेत्।
सर्वतः प्रतिरुह्णीयाद् भोजनं न समाचरेत्॥
नरकं दारुणं श्रुत्वा परान्नेषु रतिं त्यजेत्।
यो यस्यान्नं समश्नाति स तस्याश्नाति दुष्कृतम्[1]॥"

इति दर्शनाद् यात्रायां विशेषेण परान्नं त्यजेत्। तथा ब्रह्मपुराणे—"धर्म्यैक-पंक्त्या नाश्नीयात् संयुक्तः स्वजनैरपि।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत्॥
भस्म-स्तम्भ-जल-द्वार-मार्गैः पंक्तिं विभेदयेत्[2]।"

को हि जानातीत्यादिना पातक-सन्देहेऽपि एक-पंक्त्या न भोक्तव्यमित्युक्तम्। एतेन सर्वथा परान्न-भोजनाभावः सूचितः। तथा ब्राह्मे—"प्रातः-स्नायी सदा गङ्गां जपन् ध्यायन् व्रजन्[3] शनैः।
कृत-नित्य-क्रिया-हानिं न कुर्वन् स यथाविधि॥"

भविष्ये—"शुचि-वस्त्र-धरः स्नातो नित्य-हानिं न कारयेत्।
गच्छेत्तीर्थं शनैर्विद्वान् सततं संयतेन्द्रियः॥"
"यथाशक्ति ददद्दानं विप्रेभ्यः प्रीतिमावहन्।
श्रद्धां कुर्यात् सदा दाने जल्पेत तीर्थमोदने॥"

शास्त्रार्थं तथेति प्रत्ययः श्रद्धा।

याज्ञवल्क्यः—"सौमुख्याद्यति-संप्रीतिरर्थि-सन्दर्शने[4] दया[5]।
सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्त्यते॥"

सौमुख्यं मुख-प्रसादः। आदि-शब्दादुत्साहादि-परिग्रहः। सत्कृतिः पूजा। एवं गच्छेत्।

---

1. B. किल्बिषम्। 2. पंक्तिं च भेदयेत्।
3. A. व्रजेत्।
4. A. सन्दर्शना। 5. A. तथा।

अथ श्रवण-प्रकरणम् ।

वैष्णवे—"श्रुताऽभिगमिता[1] दृष्टा स्पृष्टा पीताऽवगाहिता । या पावयति भूतानि कीर्तिता च दिने दिने[2] ॥" अद्य पावन-कामो गङ्गामहं श्रोष्यामि[3] । अभिगमन[4]-दर्शन-स्पर्शन-पानावगाहन-कीर्तनानामन्यतम-करणेऽप्येतदेव फलम् ।

ब्राह्मे[5]—अद्य सद्यः-पाप-क्षय-पूर्वक-सर्व-पुण्य-प्राप्ति-कामो गङ्गामहं श्रोष्यामि[6] ।

अथ गति-प्रकरणम् ।

'गति'रत्र शरणम् ।

दान-धर्मे—"भूतानामिह सर्वेषां दुःखोपहत-चेतसाम् । गतिमन्वेषमाणानां नास्ति गङ्गा-समा गतिः ॥" भविष्ये—"पर-दार-द्रव्य-वाञ्छा-पर-द्रोह-रतस्य च । गतिमन्वेषमाणस्य गङ्गैव परमा गतिः[7] ॥" देवी-पुराणे—"यत्र यत्र कृतं वापि पापं ब्रह्म-वधादिकम् । गङ्गायां वा कृतं पापं[8] शरणाद् याति तत् क्षयम्[9] ॥ पर-दार-पर-द्रव्य-पर-हिंसा-पराङ्मुखः । गङ्गा प्राह कदागत्य मां नरः पावयिष्यति ॥" स्कान्दे—"सद्यः-पातक-संहन्त्री सद्यो-दुःख-विनाशिनी । सुखदा मोक्षदा गङ्गा गङ्गैव परमा गतिः ॥"

1. A.—भिलषिता ।
2. ViṣṇuP., part II, chap. 8, v. 115, p. 130.
3. A. श्रोष्ये ।
4. A. अभिलषण ।
5. The word Brahma suggests that a verse from the Brahma-purāṇa is missing here. The following saṃkalpa is sure to be based on it.
6. This paragraph is not found in B.
7. This verse is not found in B.
8. A. सर्वं ।
9. B. and C. तत्-क्षयात् ।

अद्य सद्यः-पातक-संहनन[1]-सद्योदुःख-विनाशन-पूर्वक-सुख-मोक्ष[2]-प्राप्ति-कामो गङ्गां गतिमहं करिष्ये[3] ।

अथ वीक्षण-प्रकरणम् ।

प्रथमतस्तावद् गङ्गायां प्राप्तायां पाप-क्षयार्थं पाप-क्षय-कारकं प्रायश्चित्तं गङ्गाधिकरणकमेव वा प्रायश्चित्त-प्रतिरूपकं[4] यथाविधि यथोक्त-पाप-क्षयोद्देश्यं वीक्षणादि कर्म[5] कुर्यात् । ततस्त्वन्यद् यथोक्तं तत्तत्-फलांशमभिसन्धाय वीक्षणादि कर्म[6] कुर्यात् । तदुक्तं स्कान्दे—"नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् । यथोक्त-फलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् ॥" दान-धर्मे—"जात्यन्धैरेव तुल्यास्ते[7] मूकैः पङ्गुभिरेव[8] वा । समर्था ये न पश्यन्ति गङ्गां पुण्य-जलां शिवाम् ॥" भविष्ये—"भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् । गङ्गाया दर्शनात्तद्वन्मर्त्यः पापैः प्रमुच्यते[9] ॥" स्मृतौ—"वर्तमानमतीतञ्च ज्ञानतोऽज्ञानतोऽपि वा । कृतं यदशुभं कर्म गङ्गां दृष्ट्वा प्रणश्यति ॥"

अद्य वर्तमानातीत-ज्ञानाज्ञान-कृताशुभ-कर्म-विनाश-कामो गङ्गामहं पश्यामि ।

भविष्ये—"गङ्गाया दर्शनान्मर्त्यः सर्व-पापैर्विमुच्यते ।"

---

1. A. संहरण ।  2. A. भोग ।

3. This saṃkalpa and the preceding verse are not found in A.  4. C. प्रायश्चित्तं वा प्रतिरूपकम् ।

5. The portion beginning from गङ्गायां प्राप्तायां etc. up to this is not found in B.

6. B. यथोक्तं कर्म omitted; the reading is ततस्त्वन्यद्वी-क्षणादिकं कर्म कुर्यात् ।

7. C. तुल्यास्तु ।  8. A. खञ्जैः पङ्गुभिरेव ।

9. This verse as well as the preceding one are not found in B.

अथ सर्व-पाप-विमुक्ति-कामो गङ्गामहं वीक्षे। दान-धर्मे—"लावण्यैर्नेष्ट-विषयैर्न सुतैर्न धनागमैः। तथा प्रसादो भवति वीक्ष्य गङ्गां यथा भवेत्॥"

अथ बहु-लावण्य-बहिष्ट-विषय-बहु-पुत्र-बहु-धनागम-वीक्षण-जन्य-प्रसाद-प्राप्ति-कामो गङ्गामहं वीक्षे[1]।

ब्रह्माण्डे—"स्थानमैश्वर्यमायुश्च प्रतिष्ठा सर्व-मान्यता। शुभाना-मान्ययत्वञ्च गङ्गा-दर्शनजं फलम्[2]॥" अथ स्थानैश्वर्यायुः-प्रतिष्ठा-सर्व-मान्यता-बहु-शुभाश्रयत्व-प्राप्ति-कामो गङ्गा-दर्शनमहं करिष्ये। दान-धर्मे—"सप्तावरान् सप्त परान् पितॄंस्तेभ्यश्च येऽपरे। पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च॥" अथ सप्तावर-सप्त-परापर-यावत्-पितृ-तारण-कामो गङ्गामहं वीक्षे। स्पर्शनाव-गाहनयोरेकतर-करणेऽप्येतदेव फलम्।

भविष्ये—"वापी-कूप-तडागादि-प्रपा-सत्रादिभिश्च वै[3]। अन्यत्र यद् भवेत् पुण्यं तद् गङ्गा-दर्शनाद् भवेत्॥" अथ वापी-कूप-तडागादि-प्रपा-सत्राद्यन्यतम-तीर्थ-दर्शन-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामो गङ्गा-दर्शनमहं करिष्ये। तथा—"यत् फलं जायते पुंसां दर्शने परमात्मनः। तद् भवेदेव गङ्गाया दर्शने भक्ति-भावतः॥" अथ परमात्म-दर्शन-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गाया दर्शनमहं करिष्ये। दर्शन-स्नानाभिलषण-करणे दश-कुल-तारणं फलम्। तथा च भविष्ये—"कदा द्रक्ष्यामि तां गङ्गां कदा स्नानं लभेमहि। इति पुंसाऽभिलषिता कुलानि दश

---

1. From भविष्ये (last line of previous page) up to this omitted in B.

2. The portion following this up to the beginning of the नमस्कार-प्रकरण is not found in B.

3. B. सत्रादि-मज्जनैः।

तारयेत् ॥" तथा—"वेदान्त-वेद्यं यत्तत्त्वं परं ब्रह्म सनातनम्। पश्यध्वं तदिमां गङ्गां प्रत्यक्षं पुरतः स्थिताम् ॥" अद्य वेदान्त-वेद्य-पर-ब्रह्म-सनातन-दर्शन-जन्य-पुण्य-सम - पुण्य - प्राप्ति - कामो गङ्गामहं पश्यामि।

पाद्मे—"मुहुर्मुहुः सदा पश्येत् स्पृशेद्वाऽपि मुहुर्मुहुः। भक्त्या यदीच्छति[1] नरः शाश्वतञ्चामृतं पदम् ॥" अद्य शाश्वतामृत-पद-प्राप्ति-कामो मुहुर्मुहुर्गङ्गामहं पश्यामि। मुहुर्मुहुः[2] स्पर्शेऽप्येतदेव फलम्।

भविष्ये—"मनोवाक्कायजैः पापैर्नरो बहु-विधैरपि। वीक्षणादेव गङ्गाया मुक्तः पूतो भवेत्ततः ॥" अद्य मनोवाक्कायज-बहु-विध-पाप-क्षय-पूर्वक-पूतत्व-भवन-कामो गङ्गामहं वीक्षे।

तथा शिव-वाक्यम्—

"त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च। पार्वतानि च पुण्यानि[3] पुण्य-क्षेत्राणि यानि च ॥ धर्मश्च सर्व-वेदाश्च सर्व-यज्ञास्तपांसि च। अहं ब्रह्मा च विष्णुश्च सर्व-शक्ति-समन्वितः ॥ अष्टाविंशति-कोट्यश्च देवतानाञ्च सर्वदा। गङ्गायां सर्व एवैते सूक्ष्म-रूपेण संस्थिताः ॥ सर्वेषां फलमाप्नोति सर्वं सर्वेषु कर्मसु ॥"

अद्य त्रैलोक्याधिकरणक-यावत्तीर्थ-यावत्-पुण्यायतन-यावत्-पुण्य-पर्वत-यावत्-पुण्य-क्षेत्र-धर्म-सर्व-वेद-सर्व-यज्ञ-तपः-सर्व-शक्ति-समन्वित-शिव-ब्रह्म-विष्णु-सहिताष्टाविंशति-कोटि-देवता - दर्शन-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामो गङ्गा-वीक्षणमहं करिष्ये। स्पर्शन-नमन-पूजन-स्तवन-ध्यान-जपाश्रय[4]-दानानामन्यतम-करणे तु वाक्ये वीक्षण-जन्य-पुण्यमित्यपहाय एतत्-स्पर्शन-जन्य-पुण्यमेतन्नमन-जन्य-पुण्यमित्यादिकं प्रयोजयेत्। एवं सर्वत्र, सर्व-

1. B. यदिच्छति। 2. B. स्पृशामि वा।
3. B. पर्वतांश्च पुण्यांश्च। 4. B. जपाश्रय not found.

कर्मसु सर्वं-फलमिति श्रवणात् । स्नानावगाहनयोरेकतर-करणे तु एतज्जन्य-पुण्य-सम-पुण्यमिति विशेषः[1] ।

स्कान्दे—"तिस्रः कोट्यर्ध-कोटी च तीर्थानां वायुरब्रवीत् । सर्वदा कलि-काले वै गङ्गायां नात्र संशयः ॥" अद्य माघे-त्रिकोटि-तीर्थ-दर्शन-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामो गङ्गामहं पश्यामि[2] । अत्रापि सर्वं[3] तत्-फलं[4] पूर्ववत् ।

महाभारते—"सर्व-तीर्थमयी गङ्गा सर्व-वेदमयो मनुः । सर्व-शास्त्रमयी गीता सर्व-देवमयो हरिः ॥" अद्य सर्व-तीर्थ-वीक्षण-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गामहं वीक्षे । अत्रापि सर्वं तत्[5]-फलं[6] पूर्ववत् ।

स्कान्दे शिव-वाक्यम्—

"ममैव परमा मूर्तिस्तोय-रूपा शिवात्मिका[7] । ब्रह्माण्डाना-मनेकानामाधारः प्रकृतिः परा[8] ॥" अद्य शैव-परम-मूर्ति-दर्शन-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गामहं वीक्षे । पर-प्रकृति-दर्शन-जन्य-पुण्य-सम पुण्य-प्राप्ति-कामो वा ।

"परमात्मा शिवोऽप्यन्यस्तस्मादन्या हि जाह्नवी । इति यः सेवते गङ्गां न स मोक्षस्य भाजनम् ॥" अद्य शिव-दर्शन-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गामहं वीक्षे । विशेष-दर्शना-भावात्[9] सर्व-कर्मणि फलदा । एतेष्वपि सर्वत्र पूर्ववत् ।

1. B. भेदः ।
2. वीक्षे ; op. cit.
3. सर्वत्र ; op. cit.
4. तत्र फलम् ; op. cit.
5. सर्व-कर्माणि ; op. cit.
6. धर्म-फलम् ; op. cit.
7. शिवात्मिके ; op. cit. ; "परमा" is read as मा परा in the SkanP.
8. प्रकृतिः परे ; op. cit. See SkanP., Kas'i-khanda, part I, chap. 27, p. 2225.
9. विशेष-निर्देशात् ; op. cit.

अथ नमस्कार-प्रकरणम्।

भविष्ये—"सर्व-तत्त्वमयीं गङ्गां परमात्म-स्वरूपिणीम्। त्रैलोक्य-पावनार्थाय गङ्गां तां प्रणमेत् सदा॥" तथा—"प्रणमेत् प्रातरुत्थाय गङ्गां पुण्य-जलां सदा। यस्तु धर्मार्थ-कामानां तथा मोक्षस्य भाजनम्॥" अद्य धर्मार्थ-काम-मोक्ष-भाजनत्व-कामः प्रातर्गङ्गामहं प्रणमामि[1]।

नारदीये—"कोटिष्वष्टासु दशसु तीर्थानां यत् फलं भवेत्। तत् समस्तमिहैकस्थं[2] गङ्गायां लभते नरः॥" अद्याष्टादश-कोटि-तीर्थ-नमन-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गामहं नमामि। सर्व-तीर्थ-नमन-जन्य-फल-सम-फल-प्राप्ति-कामो वा[3]। सर्व-देव-नमस्कार-जन्य-फल-सम-फल-प्राप्ति-कामो वा। आकर-वचनन्तु वीक्षण-प्रकरण एव लिखितम्[4]।

अथ स्पर्शन-प्रकरणम्।

ब्रह्माण्डे[5]—"अभक्तयापि महापापी गङ्गां स्पृष्ट्वा शुभो भवेत्। अनिच्छयापि संस्पृष्टा दहत्येव हि पातकम्॥"

अद्य सर्व-महापातक-नाश-पूर्वक-शुभत्व-प्राप्ति-कामो गङ्गामहं स्पृशामि।

नारदीये—"तथैव गङ्गां संस्पृश्य ब्रह्म-रूपां सुपुण्यदाम्।
शुद्धा भवन्ति ते सर्वे सद्य एव न संशयः॥"
अद्य शुद्धि-प्राप्ति-कामो गङ्गामहं स्पृशामि।

वराहे—"ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वा सर्व-पातकैः।
तस्यास्तोयेन रः स्पृष्टः सर्व-पापैः प्रमुच्यते॥"

1. This saṃkalpa and the preceding two verses are not found in B.
2. एकत्र।
3. This part of the sentence is missing in B.
4. A. लिखितमास्ते। This last sentence is missing in B.
5. B. omitted.

अथ ब्रह्म-वध-गुरु-वध-गो-वधादि-सर्व-पातक-नाश-कामो गङ्गा-तोय-स्पर्शनमहं करिष्ये ।
गाङ्गेये—"दृष्टा जन्म-कृतं पापं स्पृष्टा जन्म-शतस्य च ।
स्नाता जन्म-सहस्रस्य[1] हन्ति गङ्गा कलौ युगे ॥"

अथ जन्म-शत-कृत-पाप-क्षय-कामो गङ्गामहं[2] स्पृशामि । सर्व-तीर्थ-दर्शन-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गाम् अहं स्पृशामि[3], सर्व-देव-स्पर्शन-जन्य-फल-सम-फल-प्राप्ति-कामो वा । मूल-वाक्यान्तु वीक्षण-प्रकरणे लिखितम्[4] ।

अथ सर्व-तीर्थ-प्राप्ति-श्राद्ध-प्रकरणम्[5] ।

देवी-पुराणे—"तीर्थेषु ब्राह्मणं नैव परीक्षेत विचक्षणः । अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥ सक्तुभिः पिण्ड-दानञ्च संयावैः पायसेन वा । कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा ॥" 'पिण्याकः' तिल-कल्कः । "श्राद्धञ्च[6] तत्र कर्तव्यमर्घ्यावाहन-वर्जितम् । श्व-ध्वाङ्क्ष-गृध्र-काकानां नैव दृष्टि-हतञ्च यत्[7] । श्राद्धन्तु तैर्थिकं प्रोक्तं पितॄणां तृप्ति[8]-कारकम्[9] । अकालेऽप्यथ वा काले[10] तीर्थ-श्राद्धं तथा नरैः ॥ प्राप्तैरेव सदा कार्यं कर्तव्यं पितृ-तर्पणम्[11] । विलम्बो नैव कर्तव्यो नैव विघ्नं समाचरेत्[12] ॥"

---

1. A. जन्म-सहस्राणि । 2. A. भगवतीं गङ्गामहं, op. cit. The portion सर्व-तीर्थ-स्पर्शन-जन्य, etc. is omitted in B.

3. A. पश्यामि । After this is added—सर्वत्र भगवच्छन्द-प्रयोगः । अथ जन्म-शत-कृत-पाप-क्षय-कामो etc.

4. A. लिखितमेव । 5. B. सर्व-तीर्थ-प्राप्ति omitted.

6. A. श्राद्धन्तु । 7. A. तत् ।

8. A. तुष्टि ; omitted. 9. B. no तीर्थेषु…कारकम् ।

10. Add. r. in C. अकाले इत्यावश्यक-कालो विज्ञापितः, न तु सन्ध्या-कालेऽविहित-काले वा ।

11. Here the comm. reads—पिण्ड-दानं, etc. The Prayas'citta-tattva reading is पिण्ड-दानन्तु तत्कर्म पितृणामतिदुर्लभम् । 12. These verses are not found in the printed ed. of the DeviP.

तर्वेति। इयमधिकरण-सप्तमी, "उपपद-विभक्तेः कारक-विभक्तिर्गरीयसी"ति न्यायात्, तेन तीर्थाधिकरणकमेव श्राद्धं सर्वमेवार्घ्यावाहन-वर्जितं न तु तीर्थ-प्राप्ति-निमित्तकमिति बोध्यमिति केचित्[1]। तन्न, प्राप्तैरेव कर्त्तव्यमित्युपसंहार-दर्शनादुपक्रमोपसंहारैक-वाक्यतया तीर्थ-प्राप्ति-निमित्तक एव श्राद्धेऽर्घ्यावाहन-निषेध-प्रतीतेः। नन्वावाहनं पित्रादि-सन्निधि-फलकं, ते च तीर्थे नित्य-सन्निहिता एवेति तीर्थाधिकरणक-श्राद्ध-मात्र एवार्घ्या-[2]वाहन-बाध उचितः, वैयर्थ्यादिति चेन्न, शारीरस्य बोद्धस्य वा सन्निधेर्देवताधिकरण-विरोधेन निरस्तत्वात्। किमर्थं तर्हि चन्यत्रा-वाहनम् अदृष्टार्थमित्य[3]वेहि। अत एव नावाहन-मन्त्रोऽपि। नन्वेवं ["नमो व"(?)"एतद् व"] इत्यत्राहृष्टार्थत्वे कथं मन्त्रोहः? समवेतार्थोऽयमिति यदि[4], कथं तर्हि प्रतिपुरुष-बहु-वचन-प्रयोग इति? उच्यते, यस्य तत्तद्देवता-प्रकाशकत्वेन समवेत-[प्रकृतित्वे-(?) प्रकृत्यर्थत्वे]ऽपि प्रति-पुरुष-बहु-वचनम्, "एतद्वः पितरो वास इति जल्पन्[5] पृथक् पृथगि"ति वचन-बलादेव। नन्वेवं प्रकृतौ विभक्तेरसमवेतार्थत्वे विकृतावपि यथा [स्वधेति पाशान्-प्रत्र-मुक्तिन्यत्र(?)चदितिः पाशान् प्रमुमोक्तिन्यत्र[6]] वर्ज्यमिति(?)[7] यदि, [8]तर्हि पित्रे कोद्दिष्टेऽपि "पितरो वास" इति स्यात्, विभक्तेः

1. A. and C. कश्चित्।

2. A. and C. no एव। 3. B. अदृष्टार्थम्।

4. A. इति। 5. C. जपन्।

6. Our suggestion is based upon the ऊह-व्यवस्था in the एकादशी-तत्त्व, Jiv.'s ed., p. 90 and JaimNMV., 9.3.4, pp. 456-457; (there are two mantras) "अदितिः पाशं प्रमुमोक्त्वेतत्", "अदिति पाशान् प्रमुमोक्त्वेतान्"।

7. C. पाशाया-प्रमुक्त इत्यत्र पाठमिति।

8. तर्हि......समवेतार्थत्वात्; reading corrupt. If the

प्रकृतावेव समवेतार्थत्वादिति चेत्, भ्रान्तोऽसि, द्विधा हि विभक्तीनां समवेतार्थत्वं [मन्त्राभिवादनाद्(?) मन्त्राभिधानाद्] वाक्य-बलाच्च, तत्राद्यं पाशाधिकरणे[1], अत एव तद्विकृतावपि बहु-पाशवत्(?)-न्यायाद् बहु-वचनान्त एव पाश-शब्द-प्रयोग इति सिद्धान्तः। द्वितीयन्तु वाक्य-विषय-मात्रे सम्भवति, "यावद्वचनं वाचनिक[2]मि"ति न्यायात्।

'अकाले' अमावस्यादि-व्यतिरिक्त-काले, न तु रात्र्यादौ[3], निषेध-विरोधादिति। यत्त्वकाले रात्र्यादावित्ति, नहि कोऽपि वारः कापि तिथिर्वा श्राद्धस्य कालः, सर्वत्रैव श्राद्धस्य विधानादिति। तस्मा-दकालत्वं न रात्र्यादिकमेव प्रतिप्रसूयते इति केचित्, तन्न, सर्व-वार-तिथीनां श्राद्ध-कालत्वेऽपि आवश्यक-श्राद्ध-कालत्वस्याभावादेवेदं तीर्थ-श्राद्धमावश्यकं, तेनायमर्थः—यस्मिन्नपि काले प्रतिपदादौ श्राद्धमनावश्यकं तदापि[4] तीर्थ-प्राप्ति-पक्षे श्राद्धमवश्यं कार्यमिति।

अत्र केचिदाहुः—यस्य तु दैव-गत्या[5] सायाह्नादौ तीर्थ-लाभस्तस्य तु तीर्थ-प्राप्ति-निमित्तक-श्राद्ध-बाध एव, तद्दिने विहित-मुहूर्ताभावात्, तदुत्तर-दिने च प्राप्ति-दिनत्वाभावादिति। वस्तुतस्तु तत्रापुरत्तर-दिनेऽचिरोदित-दिन-मुहूर्त-द्वयानन्तरं श्राद्धमुचितं,[6] प्राप्त्युत्तर-विहित-मुहूर्त एव श्राद्ध-विधानात्। न चैवं विलम्बो दोषाय, स्वयमकरणात्। न चैवं प्राप्त्यर्थ-पदं लक्ष्यते, तदन्तेऽपि तच्छ्राद्धोपपत्तिः (?) प्राप्त्यनन्तर-विहित-मुहूर्तस्य "प्राप्तैरेव कर्तव्य"मित्यनेन तत्राधिकरणत्वं न विहितस्य व्यतिक्रमादिति।

---

reading be taken as "प्रेतैकोद्दिष्टे' in stead of "पितैकोद्दिष्टे", the reading is to be taken as प्रकृतावसमवेतार्थत्वात्, and not "प्रकृतावेव समवेतार्थत्वात्"। Or, the reading "पितरो वाक्यः" should be rejected and must be taken as "पितर्वाक्यः"।

1. For this adhikaraṇa, see JaimNMV., 9.3.4-5, pp 456-457. 2. A. वाचक। 3. A. रात्रौ। 4. A. तदपि। 5. यस्य दैवात्; op. cit. 6. उचितमेव, op. cit.

'पिण्ड-दानमि'ति[1]। याज्ञवल्क्ये नैव[2] पिण्ड-दाने प्राप्ते पुनः पिण्ड-दान-वचनं यत्र द्रव्यासम्पत्त्यादिना श्राद्धं न सम्भवति, तत्र पिण्ड-दानमपि कार्यमित्येवं-परम्। एकस्यां यात्रायामेकस्मिंस्तीर्थे एकमेव श्राद्धम्। यात्रा-भेदे तीर्थ-भेदे चावर्त्तते, प्राप्ति-निमित्तकत्वात्। अत एव गयादावेकस्मिन् दिने नाना-तीर्थ-प्राप्तौ तन्निमित्तकानि नाना-श्राद्धानीति। तीर्थोपवासश्च[3] फल-विशेषार्थो न त्वावश्यकः। "तीर्थमधिगम्य[4] व्रतोपवास-नियम-युक्तस्त्र्यहमवगाहमानस्त्रिरात्रमुषित्वा सर्व-पापेभ्यो विमुच्यते स्वस्तिमांश्च भवती"ति देवल-वचनात्[5]। एवञ्चात्र त्रिरात्रोपवास-त्र्यह-तत्तीर्थ-स्नानानां सर्व-पाप-विमुक्ति-स्वस्ति-मात्र-फलम्। 'चाहितः'[6] पूतः श्राद्धवनीयो[7] भवतीति यावत्। एक-वाक्यार्थं विशिष्टान्वयो न तु प्रत्येकमन्वयो वाक्य-भेदापत्तेः।

केचित्तु सर्वत्रैव तीर्थे[8] मुण्डनमुपवासञ्चेच्छन्ति।

"मुण्डनञ्चोपवासश्च सर्व-तीर्थेष्वयं विधिः।
वर्जयित्वा गयां गङ्गां विशालां विरजां तथा॥"

---

1. It is evident that Viśvasadevī explains here the line "पिण्ड-दानं ततः श्रेष्ठं पितॄणामतिदुर्लभम्" that is missing between the lines प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृ-तर्पणम् and विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत्। See p. 246, where the line occurs in the sequence as mentioned here.

2. A. याज्ञवल्क्येन।

3. A. तीर्थोपवासस्तु।

4. A. तीर्थमधिकृत्य।

5. Quoted by Raghunandana in the गङ्गा-माहात्म्य-प्रकरण of the PrāyT., p. 77; v.r. तद्तीर्थमभिगम्य···सर्व-पापैः प्रमु···।

6. The original verse or passage that contains the word "चाहितः" is missing.

7. C. श्राद्धवनीये।

8. A. तीर्थे प्राप्ति-दिने।

इति स्कन्द-पुराणीय-वचन-बलेन[1] सर्व-पद-स्मरणात्[2] गयादि-विशेष-निषेधाच्च । तत्र, सर्व-पदार्थ[3]स्यासङ्कोचेऽतिप्रसङ्गात्[4] ।

तथाहि—"भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु । यथा शरीरस्योद्देशाः के च मुख्यतमाः स्मृताः । तथा पृथिव्यामुद्देशाः केचित् पुण्यतमाः स्मृताः ॥ स्वभावादद्भुताद् भूमेः सलिलस्य च तेजसा । परिग्रहैर्मुनीनाञ्च तीर्थानां पुण्यता स्मृता ॥"

इति महाभारते तीर्थोद्देशे भीष्म-वाक्येन सातिशय-फलकस्य स्थानस्य च तीर्थत्वाभिधानात् । न चेष्टापत्तिः, स्व-देशस्य[5]-प्रस्रवणादौ वपनोपवासयोः सर्व-देशीय-शिष्टाचार-विरुद्धत्वात् । न च सर्व-पदं विशेष-तीर्थ-परं, मध्य-देशीयानां सकल-शिष्टानुमतस्य प्रयाग-वपनं विनोपपत्तेः (?) । न च येष्वेव महा-तीर्थेषु विशेषतो मुण्डनं विहितमस्ति, तत्[6]-परमेव सर्व-पदमिति वाच्यं, प्रयाग-पदान्यत्र तद्-विधान-श्रवणात्(?) ।

अथ—"गङ्गां सम्प्राप्य यो धीमान् मुण्डनं नैव कारयेत् । वृथा तस्य क्रिया सर्वा तीर्थद्रोही भवेन्नरः ॥ गङ्गायां भास्कर-क्षेत्रे मुण्डनं यो न कारयेत् । स कोटि-कुल-संयुक्त आकल्पं रौरवे वसेत् ॥ गङ्गां प्राप्य सरिच्छ्रेष्ठां कल्पान्त[7]-पाप-राशयः । केशानाश्रित्य तिष्ठन्ति तस्मात्तान् परिवर्जयेत् ॥ यावन्ति नख-रोमाणि गङ्गा-तोये पतन्ति वै । तावद्वर्ष-सहस्राणि स्वर्ग-लोके महीयते ॥"

इति वचनाद् गङ्गायां प्रयाग-व्यतिरेकेऽपि मुण्डनमिति चेत्, अस्तु तावदेवं, तथापि बहु-वचनानुपपत्तिः, प्रयाग-गङ्गयोरेव

1. A. वचनेन ; 2. A. स्मरणात् ;
3. A. सर्व-पदस्य । 4. C. इति प्रसङ्गात् ।
5. C. स्वदेशान्त-ज्ञत...
6. C. तत्र । 7. C. कल्पान्ते ।

मुण्डन-विधानात्, विशेषेण[1] निषेधानुपपत्तिश्च । नर्मदादौ पुरुषोत्तमादौ च मुण्डनस्यासाधनत्वात् । न चैतद्विशेषेण निषेध-बलादेव[2] तदेवमुक्तं, मुण्डनम्, व्यवहार-विरोधस्योक्तत्वात् । वस्तुतस्तु गङ्गा-मुण्डन-विषयक-वाक्यानाममीषां कल्प-द्रुम-कारादिभिः सर्वैरेवानिबन्धनेन निर्मूलतैव ।

अथ—"गङ्गायां भास्कर-क्षेत्रे माता-पित्रोर्गुरौ मृते ।
आधाने सोम-पाने च वपनं सप्तसु स्मृतम् ॥"

"भास्कर-क्षेत्र" प्रयागः, "प्रयागे मुण्डनमि"ति स्मृति-समुच्चय[3]-लिखित-वचनात् । गङ्गायां वपनमिति केचित् । [ तन्न ],

"मुण्डनञ्चोपवासश्च सर्व-तीर्थेष्वयं विधिः ।
वर्जयित्वा गयां गङ्गां विशालां विरजां तथा ॥"

इति स्कन्द-पुराणीय-वचनेन गङ्गा-गया-विशाला-विरजा-व्यतिरिक्ते तीर्थे वपनं विदधता गङ्गायामर्थतो वपनस्य निषेधात् । तर्हि षोडशि-ग्रहणाग्रहणवद्विकल्पोऽस्त्विति चेत्[4] भवेदेवं यदि विषय-भेदेनाविरोधो न स्यात्, न त्वेवम् । तथाहि—

"यावन्ति नख-रोमाणि वायुना प्रेरितानि वै ।
पतन्ति जाह्नवी-तोये नराणां पुण्य-कर्मणाम् ।
तावद्वर्ष-सहस्राणि स्वर्ग-लोके महीयते[5] ॥"

इत्यादि-वचनानां गङ्गायां मुण्डन-फल-विधायकानामविगीत-शिष्टाचारोपष्टम्भेन[6] प्रयागावच्छिन्न-गङ्गा-वपन-परत्वे निषेध-वचनस्य तदनवच्छिन्न[7]-गङ्गा-परत्वमिति निर्णयात् । कथं तर्हि

---

1. A. विशेष ।
2. A-B. तदेवमुक्तं ।
3. C. स्मृति-समुच्चये । 4. C. विकल्पोपस्थितिश्चेत् ।
5. Matsya-purana, chap. 106, v. 52, p. 318.
6. A-B. शिष्टाचारो…म्भेन । 7. C. तदवच्छिन्न (?)

सर्वे-तीर्थेष्विति बहु-वचनं, वै-तीर्थ-शब्दस्य बहुव्रीहिणा प्रयाग-वचनत्वं सिद्धं तस्याविवक्षितत्वात्[1] अहं संमार्ष्टीतिवत्। कथं तर्हि गयादि-विशेष-निषेधः? इत्थम्। यथा "मौद्गचरुर्भवती"ति विशेष-विधिनैव माषादि-निषेधे सिद्धे पुनः "अयज्ञिया वै माषाः" इति माष-निषेध-वचनं यथा प्रतिनिधि-विधयापि माषा न ग्राह्या अत्यन्तायज्ञियत्वादित्येवं-परं तथा प्रयागादि-वचन-निषेधोऽप्य-त्यन्तागस्त्व[2]-पर इति[3]।

* * * *

"गङ्गाम्भः-कण-दिग्धस्य वायोः संस्पर्शनादपि।
पाप-क्षीणा अपि नराः शुभां गतिमवाप्नुयुः॥"

अद्य-सर्व-पाप-क्षय-पूर्वक-शुभ-गति-प्राप्ति-कामो गङ्गाम्भः-कण-दिग्ध-वायु-स्पर्शमहं करिष्ये। तथा

दान-धर्मे—"अप्रतिष्ठाश्च ये केचिदशर्म-शरणाश्च ये।
तेषां प्रतिष्ठा गङ्गेह शरणं शर्म वर्म च॥"

अथ शौच-प्रकरणम्।

ब्रह्माण्डे—"माघ-हस्त-गतं यावद् गर्भतस्तीरमुच्यते।
अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठ-गतैरपि॥
न मन्त्रो न विधिः कालो न मृदो न च गोमयम्॥"

---

1. A. तस्य विवक्षितत्वात्।
2. C.—अत्यन्ताग्रता-परः।

The srāddha-prakaraṇa abruptly breaks in MS. A. The text of the chaps. सर्व-वस्तु-प्रतिकृति-स्थापन and अभय missing in A cannot be deciphered from B. C does not deal with them.

स्कान्दे—"तीराद् गव्यूति-मात्रन्तु परितः क्षेत्रमुच्यते ।
तत्र दानं तपो होमो गङ्गायां नात्र संशयः ॥
अत्रस्थास्तु दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥"

उभयत्र तटे प्रत्येकं क्रोश-द्वयं क्षेत्रम् । तदुक्तं
भविष्ये—"गङ्गा-सीमां न लङ्घन्ति सर्व-पापान्यशेषतः ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ॥
एक-योजन-विस्तीर्णा क्षेत्र[1]-सीमा तट-द्वयात् ॥"

दान-धर्मे—"भाद्र-कृष्ण-चतुर्दश्यां यावदाक्रमते[2] जलम् ।
तावद् गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥"

ब्रह्माण्डे—"प्रवाहमवधिं कृत्वा यावद्धस्त-चतुष्टयम् ।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥
अत्र दत्तं हुतं जप्तं कोटि-कोटि-गुणं भवेत् ॥"

[3]यद्यपि पुण्य-क्षेत्रादीनामस्वामिकत्वं निरूपितं, तथापि "अत्र नारायणः स्वामी"त्यनेन नारायण-क्षेत्र-प्रतिपादनमर्थोक्तं, विशेषोक्त-नियमात् । पुण्य-क्षेत्रादिकन्त्वस्वामिकमेव ।

तथाह यमः—"अटवी पर्वताः पुण्या नद्यस्तीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः[3] ॥"

अद्य नारायण-क्षेत्रे कर्तव्यैतत्[4]-कर्म-जन्य-फल-कोटि-कोटि-गुण-फल-प्राप्ति-काम इदममुक-कर्माहं करिष्ये । अद्य-गङ्गा-क्षेत्रे गङ्गाधिकरणक-दातव्यैतद्दान-जन्य-फल-सम - फल - प्राप्ति - कामः इदममुक-दानं यथा-दैवतं यथा-नाम-गोत्रायेत्यादि । तपोहोमादि-करणेऽप्येतदेव[5] फलम् । वाक्ये तु दान-पदमपहाय कर्तव्य-

---

1. A. गङ्गा । 2. B. & C. यावत् संक्रमते ।
3-3. B. यद्यपि···परिग्रहः missing. 4. B. & C. कर्तव्ये तत् ।
5. B. करणेऽप्येवमेव, C. करणेऽप्येतावदेव ।

होम इत्यादि-विशेषः[1]। अद्य स्वर्ग-गमन-कामो गङ्गा-क्षेत्रे स्थितिमहं करिष्ये। अद्य गङ्गा-क्षेत्रेऽपुनर्भवत्व-कामो मरणमहं करिष्ये। स्वभाव-मरणेऽप्येतदेव फलम्। एतेषां मूल-वाक्यन्तु पूर्वमेव लिखितमास्ते। ब्रह्माण्डे—"यत्र गङ्गा महाराज गम्भीरस्तत्र तपोवनम्। सिद्धि-क्षेत्रञ्च तज्ज्ञेयं समन्तादर्ध-योजनम्॥"

अद्य अमुकाधिष्ठित-स्थानाधिकरणक-कृतामुक-कर्म-जन्य-फल-सम-फल-प्राप्ति-काम इदममुक-कर्माहं करिष्ये[2]। तथा तपोवनाधिकरणकं सिद्ध-क्षेत्राधिकरणकञ्चेति वाक्यं कर्तव्यम्। अत्र हस्त-चतुष्टयाभ्यन्तरे प्रतिग्रह-निषेधः सर्वत्रैव। सार्ध-हस्त-शताभ्यन्तरे तु तीर्थे तन्निषेधो गण्डकयादि-प्रसिद्ध-नदीष्विति शिष्टाचारः। क्षेत्रे प्रतिग्रह-निषेधस्तु गङ्गायामिव तत्रैव क्षेत्र-कथनादिति।

मात्स्ये—"तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु च। निमित्तेषु च सर्वेषु अप्रमत्तो भवेन्नरः॥ तीर्थे यः प्रतिगृह्णाति पुण्येष्वायतनेषु च। निमित्तेषु च सर्वेषु चैतेषु च तथैव च॥ निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते[3]॥" गङ्गायामन्यदपि तत्रैव[4]।

अथावगाहन-प्रकरणम्[5]।

तत्र वन-पर्वणि—"अप्यकार्य-शतं कृत्वा कुर्याद् गङ्गाभिषेचनम्। सर्वं दहति गङ्गाम्भस्तूल-राशिमिवानलः[6]॥" अद्याकार्य-शत-नाश-कामो[7] गङ्गाभिषेचनमहं करिष्ये।

---

1. A. विभेदः। 2. Add. r. in C: अद्य गङ्गा-क्षेत्रे गङ्गाधिकरणक-दातव्यैतद्दान-जन्य-फल-सम-फल-प्राप्ति-कामः इदममुक-दानं यथा-दैवतं यथा-नाम-गोत्रायेत्यादि। 3. MatP., 105.16, p. 314; v. r. एवं तीर्थे न गृह्णीयात्...अप्रमत्तो भवेद्द्विजः।

4. B. अद्य गङ्गा-क्षेत्रे गङ्गाधिकरणक-दातव्यैतद्दान-जन्य (previous page, l. 19)···गङ्गायामन्यदपि तत्रैव omitted.

5. This chapter-heading is missing in C.; see f. 14a.

6. 3.8.89; v.r. यद्यकार्य...गङ्गावसेचनम्। सर्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनम्। 7. A. दहन-कामो।

दान-धर्मे—“अपहृत्य तमस्तीव्रं यथा भात्युदये रविः । तथाऽपहृत्य पापानि[1] भाति गङ्गा-जलोक्षितः[2] ॥” अद्य पाप-नाश-कामो गङ्गावगाहनमहं करिष्ये । ब्रह्माण्डे—“यैः पुण्य-वर्धनी गङ्गा सकृद् भक्त्याऽवगाहिता । तेषां कुलानां लक्षन्तु[3] भवात्तारयते शिवा ॥” अद्य लक्ष-कुल-तारण-कामो गङ्गावगाहनमहं करिष्ये । [4]भविष्ये—“भक्त्या गङ्गावगाहस्य फलं वक्तुं न शक्यते । स्वर्ग-मोक्षौ फलं तस्य एवमाहुर्मनीषिणः[4] ॥” अद्य[5] अनिर्वचनीय-पाप-नाश-कामः [6]स्वर्ग-मोक्ष-फल-प्राप्ति-कामो वा[6] भक्त्या गङ्गावगाहनमहं करिष्ये[7] । [8]भविष्ये—“सकृद् गङ्गावगाहेन कुल-कोटीः समुद्धरेत् ।” अद्य बहु-कुल-कोटि-समुद्धरण-कामो गङ्गावगाहमहं करिष्ये । तथा—“मोक्षञ्च लभते मर्त्यः पातकं चावगाह्य च ।” अद्य मोक्ष-प्राप्ति-कामो गङ्गावगाहनमहं करिष्ये । महापातक-नाश-कामो वा । गाङ्गेये—“सेवते यः कुरुक्षेत्रं लभेत्तदवगाह्य सः ।” अद्य कुरुक्षेत्र-सेवन-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गावगाहनमहं करिष्ये[8] । दान-धर्मे—“पुरुषान् पुनाति पुरुषः शतशोऽथ सहस्रशः । अवगाह्य तथा सर्वान् गङ्गां भक्त्योत्तमां शिवाम् ॥” अद्य शतशः सहस्रशः सर्व-पुरुष-पुनन-कामो भक्त्या गङ्गावगाहनमहं करिष्ये । तथा “सद्यः पाप-क्षयो भवेत् ।” अद्य सद्यः-पाप-क्षय-कामो गङ्गावगाहनमहं करिष्ये[9] ।

---

1. पाप्मानं C.
2. 13. 26. 33. v.r. अपहृत्य··· । तथापहृत्य··· । पाप्मानं ।
3. C. लक्षन्तु ।
4-4. Not found in A.
5. अद्य not found in C.
6-6. This portion is not found in A-B.
7. A-B. add. r. स्वर्ग-मोक्ष-कामो वा ।
8-8. Not found in B.
9. B. गङ्गामहमवगाहिष्ये ।

अथ स्नान-प्रकरणम् ।

तत्र सर्व-कर्मणि कर्तव्ये भक्ति-श्रद्धे अवश्यमेव कर्तव्ये । यतो भक्ति-श्रद्धा-पुरःसरमेव सर्वं कर्म विशेषमापादयति । तथा च[1] स्कान्दे—"अनुभूति-प्रमाणा हि भक्ति-श्रद्धा महेश्वरी । भावानुरूप-फलदा गङ्गा सर्व-जगद्धिता ॥" तथा देवलः—"महदप्यफलं कर्म श्रद्धया परिवर्जितम् ।"[2] अफलम् अल्पफलम् श्रद्धा शास्त्रे तथेति प्रत्ययः[3] । तथा पाद्मे—"अश्रद्धया कृतं सर्वं यत् कृतं पारलौकिकम् ।" तथा यमः—"श्रद्धा भक्तिश्च काम्यानां वृद्धि-चे मकरे हिते ।"[4] काम्यानां काम्य-कर्मणाम् । एतेन सर्वत्र भक्ति-श्रद्धाभ्यां विशेष-फलं, तस्माद् विशेषेण ते कुर्यादित्यर्थः ।

यद्वा, गङ्गाया अभक्त्यापि स्पर्शनादि-कर्मणः सर्व-महा-पातकादि-नाशः फलमित्युक्तं यत्तत्तु सामान्यं, भक्त्या तु विशेषः । तथा च ब्राह्मे[5]—"अभक्त्यापि महापापी गङ्गां स्पृष्ट्वा[6] शुचिर्भवेत् ।..."
"[1]...तथैव गङ्गां संस्पृश्य ब्रह्म-रूपां सुपुण्यदाम् । शुद्धा भवन्ति ते सर्वे सत्यमेव न संशयः ॥ यथा कृष्णायसो लोके मलीमस-तरोऽपि च । रसस्य दर्शनात् सद्यो हेमत्वं प्रतिपद्यते ॥"

प्रथमतस्तावत् पाप-क्षयार्थं नारायण-स्मरण-पूर्वकं गङ्गाम्भसि

---

1. A. तदुक्तं ।
2. Not found in the printed ed. of the DevalaS.
3. C. शास्त्रे तथेति प्रत्ययश्च श्रद्धा ।
4. Not found in the printed eds. of the Yama-smṛti and Yama-saṃhitā.
5. 'B' "तथा पाद्मे"..."शुचिर्भवेत्..." missing.
C. ब्रह्माण्डे । Not found in the Brahma and Brahmāṇḍa-purāṇas.
6. C. वीक्ष्य ।

मज्जनं कुर्यात्[1] । तथा भविष्ये—"अपस्तु नारायणं देवं स्नान-काले स्मरेत् सदा । साक्षाद्ब्रह्म-स्वरूपिण्यां गङ्गायाञ्च विशेषतः ॥ गङ्गायां मोक्षदं स्नानं महा-पातक-नाशन"मिति श्रवणात् ।

"नैर्मल्यं भाव-शुद्धिश्च विना स्नानं न विद्यते[2] । तस्मान्मन-विशुद्ध्यर्थं स्नानमादौ विधीयते ॥"[3] स्नानमत्र केवल-मज्जन-मात्रं, ततो यथोक्त-फलांशमभिसन्धाय स्नायात् । यथा स्कान्दे—"नृणां पापकृतां तीर्थं पापस्य शमनं भवेत् । यथोक्त-फलदं तीर्थं भवेच्छुद्धात्मनां नृणा"मिति[4] । यद्वा स्कान्दे—"शुचिना कर्म कर्तव्यं सर्व-भावात्मना सदा ।" ब्राह्मे[5]—"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्तिश्च स तीर्थ-फलमश्नुते ॥···चित्तमन्तर्गतं दुष्टं तीर्थ-स्नानैर्न शुध्यति[6] । शतशोऽपि जलैर्धौतं सुरा-भाण्डमिवाशुचि ॥ न तीर्थानि विजानीमो व्रतानि न च शुश्रुम । दुष्टाशयं दम्भ-रुचिं पुनन्ति व्युषितेन्द्रियम् ॥"

---

1-1. Not found in C.

2. B. विना स्नानाच्च जायते । See BhavP., uttara-parvan, chap. 123, p. 485 (a)···न शुध्यति ।

3. Op. cit., काय-विशुद्ध्यर्थं···, PadmP., sṛṣṭi-khaṇḍa, chap. 20, v. 142, p. 280, तस्मान्मनोविशुद्ध्यर्थं··· ।

4. SmṛSam., S'aṅkhaS., chap. 8. v. 16, p. 381. Also found in BhavP., uttara-parvan, chap. 122, p. 484, v. 3 ; AgniP., chap 109, v. 1 b—2 a, p. 236, S'aṅkhaS., chap. 8, v. 15, p. 381

5. C. स्कान्दे ब्राह्मे च । BrahmP., 76 chap, v. 20, p. 344 ; also found in chap. 25, v. 2.

6. B. तीर्थ-स्नाने न शुध्यति । This verse is not found in A. C. तीर्थ-स्नानैर्न शुध्यति, BrahmaP., chap. 25, v. 4, p 13.

एतानि वचनानि यद्यपि सामान्य-तीर्थ-विषयाणि, तथापि गङ्गां प्रत्येतत् न सङ्गच्छते। तथा च स्कान्द-मात्स्ययोः—"क्रोध-लोभैक-वृत्तीनां विपरीत-क्रियावताम्। कामिनाञ्च तथान्यत्र तपोयज्ञादि निष्फलम्॥ गङ्गायां यत् कृतं सर्वं सफलं नात्र संशयः। पर-ब्रह्म-स्वरूपाया गङ्गायास्तु स्वभावतः॥" तथा ब्रह्माण्डे—"सर्व-भावाविशुद्धोऽपि गङ्गायां कुरुते तु यत्। सम्पूर्ण-फलमाप्नोति हेलया तस्य कर्मणः॥ पापिनां पाप-हन्तृत्वं स्वर्ग-मोक्षाप्ति-हेतुता। स्वभाव एव गङ्गायाः शैत्यं शीत-रुचेर्यथा॥" तथा[1]—"न मन्त्रो न विधिश्चैव न मृदो न च गोमयम्। न काल-नियमः क्वचिद् गङ्गां प्राप्य सरिद्वराम्॥ सर्व एव शुभः कालः सर्व-देशस्तथा शुभः। सर्वो जनस्तथा पात्रं स्नानादौ जाह्नवी-जले॥" इति भविष्य-पुराणीय-वचन-दर्शनाद् भावाशुद्धयापि गङ्गायां कर्म कुर्वता अशुचिनापि तत्तत्-पुण्य-[2]मुद्दिश्य फलं लभ्यते इत्यर्थः।

वैष्णवे—"स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति। अपूर्व-पुण्य-प्राप्तिश्च सद्यो मैत्रेय जायते॥"

अद्यामुके मासि [3]अमुक-पक्षे अमुक-तिथौ[3] सद्यः पाप-प्रणाश-पूर्वकं सर्व-पुण्य[4]-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। एवं सर्वत्र मास-पक्ष-तिथीनां [5]यथा-नाम-निमित्तमुल्लेखं कुर्वन् वाक्यं कारयेत्। यथा-निमित्तं पुण्य-काल-प्रकरणे[5] युगाद्यादि-निमित्तोपादानमित्यर्थः[6]।

---

1. तथा स्मृतिः C.   2. C. सम्पूर्णमुद्दिश्य।
3—3. Not found in B.   4. B. and C. सद्योऽपूर्व-पुण्य-।
5. Not found in B.   6. A. सर्व-निमित्तानामुपादानं कर्तव्यम्।

ब्रह्माण्डे—"अनेक-जन्म-सम्भूतं पापं पुंसां प्रणश्यति। स्नान-मात्रेण गङ्गायां सद्यः स्यात् पुण्य-भाजनम्॥" अद्यानेक-जन्म-सम्भूत-पाप-नाश-पूर्वक-सद्यः-पुण्य-भाजनत्व-कामो गङ्गायां स्नानमहं[1] करिष्ये। एतत्तु स्नानं यथोक्तेन विधिना कर्तव्यम्।

अद्य[2] गङ्गा-तीर-कृत-पाप-क्षय-कामो गङ्गा-स्नानमहं करिष्ये। सर्व-पाप-क्षय-पूर्वक-स्वर्ग-गमन-कामो वा। व्रत-दान-तपोयज्ञादि-पवित्र-कर्म-जन्य-फल-प्राप्ति-कामो मोक्ष-प्राप्ति-कामो, भव-जन्मा-भावपूर्वक-मोक्ष-प्राप्ति-कामो वा गङ्गायां स्नायात्। तदाह पद्म-पुराणे[3]...

अयञ्च स्नान-विधिः सर्व-वर्ण-साधारणः सर्व-शाखि-साधारणश्च सङ्कोचे प्रमाणाभावात्। पुराण-श्रवणे च सर्वाधिकार-श्रवणात्। अनधीत-वेदं प्रति चायमेव विधिः, प्रशस्त-वेद-मन्त्र-शून्यत्वात्। तथा च स्मृतिः—"नैर्मल्यं भाव-शुद्धिश्च विना स्नानं न जायते। तस्मात्मन-विशुद्ध्यर्थं स्नानमादौ विधीयते॥"[4] यदि स्नानापनेयः प्रत्यवायः स्यात्, तदा स्नान-विधेः प्राक् मलाप-कर्षणं कर्तव्यम्। तदाह स्कान्दे—"तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः[5]। आचम्य च ततः पश्चात् स्नानं विधिवदाचरेत्॥" ततो[6] मृत्तिकया गात्रमनुलिप्य पुनरपि स्नायात्। अत्र मन्त्रः—"अश्व-क्रान्ते" इत्यादिः। "अतुह्रतैस्तु-तैर्वा जलैः स्नानं विधीयते। तीर्थं प्रकल्पयेद्विद्वान् मूल-मन्त्रेण

---

1. B. गङ्गा-स्नानमहं। 2. Not found in A. and C.

3. B. स्कान्दे। The quoted verse or verses are missing. 4 For references, *vide supra.*

5. A. स्यादशुचिः पुनः।

6. This portion is missing in A and C.

मन्त्रवित् ॥"[1] "नमो नारायणायेति मूल-मन्त्र उदाहृतः। दर्भ-पाणिस्तु विधिना आचान्तः प्रयतः शुचिः ॥"[2]

आचमनमाह भविष्य-पुराणे—"समौ च चरणौ कृत्वा तथा बद्ध-शिखो नृप! कृताञ्जलि-करं कृत्वा एकाग्र-सुमना द्विजः ॥" नारसिंहे—"दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत् पुनः। त्रिः पिबेदीक्षितं तोयमास्यमेवमुपस्पृशेत् ॥" द्विः परिमार्जयेत्। आचमनन्तु ब्राह्म-तीर्थेनैव कर्तव्यम्। तत्राह मनुः—"ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्। काय-त्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥"[3] विप्र इति आचमन-कर्तृ-मात्रोपलक्षणम्। आचमनोद्देशेनैव तीर्थ-विधानात्। तथा च ब्रह्म-पुराणे—"अङ्गुष्ठोत्तरतो बद्ध-पाणेर्यद्दक्षिणस्य तु। एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनेषु च ॥[4] ब्राह्मेणाचमनं शस्तं पैत्रं पित्र्येण सर्वदा। देव-तीर्थेन देवानां प्राजापत्यं निजेन चे"ति। कायं प्राजापत्यम्, त्रैदशिकं दैवम्। अत्र सम्भवे ब्राह्म-तीर्थेनैवाचमनं नित्य-कालमिति श्रवणात्। व्रणादिना ब्रह्म-तीर्थोपरोधे काय-त्रैदशिका-

1. MatP., chap. 2, p. 306; PadmaP, sṛṣṭi-khaṇḍa, chap. 20, v. 43, p. 286.

2. MatP., chap. 102, v. 2, p. 306; PadmaP., sṛṣṭi-khaṇḍa, chap. 20, v. 144, p. 286; Bhaviṣya-purāṇa, uttara-parvan, chap. 123, v. 3, p. 485; v. r. आचान्तः... सुधीः।

3. Chap. 11, v. 58, p. 40; BhavP., parvan 1, chap. 3, 87b-88a.

4. BrahmaP., chap. 221, v. 96, p. 880, v. r. अङ्गुष्ठोत्तरतो रेखा पाणेर्यद्दक्षिणस्य च...आचमनाय वै ॥ Op cit, v. 99, प्राजापत्यञ्च तेन च।

भ्यामिति व्यवस्थित-विकल्पः। पित्र्यन्तु सदा निषिद्धम्, "न कदाचने"त्यभिधानात्। याज्ञवल्क्यः—"हृत्-कण्ठ-तालुगाभिश्च यथासंख्यं द्वि-जातयः। शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः॥"[1] अन्ततः ओष्ठ-प्रान्ते। व्यासः—"अपः पाणि-नखाग्रेण आचामेद् यस्तु वै द्विजः। सुरा-पानेन तत्तुल्यमित्येवमृषिरब्रवीत्॥"[2] दक्षः—"प्रक्षाल्य पाणी पादौ च त्रिः पिबेदम्बु वीक्षितम्॥" तथा च गारुडे—"न-नष्टाभिरफेनाभिरदुष्टाभिश्च धर्मतः। शौचेप्सुः सर्वदाचामेदासीनः प्रागुदङ्मुखः[3]॥" व्यासः—"शिरः प्रावृत्य कण्ठं वा मुक्त-केश-शिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥ नचैव वर्ष-धाराभिर्न तिष्ठन्नोद्धृतोदकैः। नचैवाङ्गुलिभिः शब्दं न कुर्वन्नान्य-मानसः॥" देवलः—"इत्थं चमङ्घ्रिराजानु[4] प्रक्षाल्य चरणौ पृथक्। हस्तौ चा[5] मणि-बन्धाभ्यां पश्चादासीत संयतः[6]॥" आजानु इति अश्व-भ्रमणादिना तत्-पर्यन्तमशौचे "आ जानुभ्यां पादा"विति हारीतोक्तेः। गोभिलः—"जानुभ्यामूर्द्ध्वमाचम्य जले तिष्ठन्न दुष्यति॥" पैठिनसिः—"अन्तरुदगाचान्तोऽन्तरेव शुध्यति। बहिरुदगाचान्तो बहिरेव। तस्मादन्तरेकं बहिरेकं पादं संस्थाप्या-

1, YajnS, 1, 21; hnavsamh., p, 136. NPS. ed, p. 7, v. r. in both हृत्-कण्ठ-तालुगाभिस्तु। विज्ञानेश्वर in the मिताक्षरा says, "अन्ततः अन्तर्गतेन तालुना"।

2. Not traced in the VyasaS, UnavSamh.

3. A. माङ्मुख हि। BhavP, uttara-parvan, chap 123, v. 2, p. 485, v. r. समाचरेत्। Not traced in vyasaS,

4. A. राजस्य।

5. A. वा। 6. Not traced in DevalaS.

चामेत्। सर्वत्र शुद्धो भवति।" बौधायनः—"पाद-प्रक्षालनोच्छिष्टेन नाचामेत्", तदा भूमौ स्रावयित्वाचामेदित्यर्थः[1]॥ आपस्तम्बः—"न नग्नाभिषाकारणात्।" अकारणाद् रोगादि-व्यतिरेकेण। गारुडे "शिरः प्रावृत्य कण्ठं वा मुक्त-केश-शिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥" स्मृतिः—"गायत्र्या तु शिखां बद्धा नैऋर्त्यां ब्रह्म-रन्ध्रतः। पश्चाच्च त्रुटिकां बद्धा ततः कर्म समारभेत्॥" कर्माचमनादितो याज्ञवल्क्यः—"कनिष्ठा-देशिन्यङ्गुष्ठ-मूलान्यग्रं करस्य च। प्रजापति-पितृ-ब्रह्म देव-तीर्थान्यनुक्रमात्॥"[2] देशिनी तर्जनी। गारुडे—"अङ्गुष्ठ-मूलान्तरतो रेखाया ब्राह्ममुच्यते। अन्तराङ्गुष्ठ-देशिन्योः पितृणां तीर्थमुत्तमम्॥ कनिष्ठा-मूलतः पश्चात् प्राजापत्यं प्रचक्षते। अङ्गुल्यग्रं स्मृतं दैवं तद्देवार्षं प्रकीर्तितम्॥ मूले दैवतमार्षं स्यादाग्नेयं मध्यतः स्मृतम्। तदेव सौमिकं तीर्थमेतज्ज्ञात्वा न मुह्यति॥" देवलः—"सोपानत्को जलस्थो वा मुक्त-कच्छ शिखोऽपि वा। उष्णीषी वापि नाचामेत्······॥ न गच्छन् शयानश्च न परांश्चैव संस्पृशन्। न हसन्नैव संजल्पन् नात्मानञ्चैव वीक्षयन्॥ केशानीवीमधःकायं संस्पृशन् धरणीमपि। यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करम्॥"[2] आत्मानं हृदयम्। वीक्षयन् इति स्वार्थे णिच्। अधःकायो नाभ्यपेक्षया। प्रचेताः—"अनन्तर्वासा नाप्सु कुर्वन् न चामेध्यम्।" अनन्तर्वासा अधोवस्त्र-शून्यः। शङ्खः—"न शूद्राशुच्येक-पाण्यावर्जितेन।" अत्राशुचिना एक-पाणिना परेणावर्जितं जलं निषिद्धं शूद्र-साहचर्यात्। "मूत्र-पुरीषे कुर्वन् न दक्षिण-हस्तं स्पृशति सर्वत्रनाचमनीय"मिति

1 Baudh S., 1. 5. 11-12, p. 430 v. r. प्रक्षालनोच्छेषणेन।

2 YajnS., 2. 19, p 6 N SP. ed.

बौधायनेन, "वाम-करेण कमण्डलु-धारणाद्बे"ति प्रपञ्चितं छन्दोगाह्निके।

व्यासः—"नैक-हस्तार्पित-जलैर्विना शूद्रेण वा पुनः॥" ब्राह्मे—"संवृत्याङ्गुष्ठ-मूलेन द्विः प्रमृज्यात्ततो मुखम्। संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत्॥ अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्। अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रं पुनः पुनः॥ कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै। सर्वाभिश्च शिरः पश्चाद् बाहू चाग्रेण संस्पृशेत्॥" तिसृभिः तर्ज्जनी-मध्यमानामिकाभिः। अत्र घ्राणस्य चक्षुषश्च श्रोत्रस्य च स्पर्शनं पुट-द्वये, तदभिप्रायेण पुनःपुनरिति॥ बाहु-स्पर्शनं चांसदेशे। तथा गारुडे—"संवृत्याङ्गुष्ठ-मूलेन मुखं वै[1] समुपस्पृशेत्। अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नेत्र-द्वयं ततः॥ तर्जन्यङ्गुष्ठ-योगेन च स्पृशेन्नासा-पुट-द्वयम्। तर्जन्यङ्गुष्ठ-योगेन श्रवणौ समुपस्पृशेत्॥ सर्वासामथ-योगेन हृदयन्तु तलेन वै। संस्पृशेच्च शिरस्तद्वद् अङ्गुष्ठेनाथवा द्वयम्॥ संस्पृष्टे हृदये चास्य प्रीयन्ते सर्व-देवताः। मूर्ध्नि संस्पर्शनादेव प्रीतः स पुरुषो भवेत्॥"[2] गौतमः—"खानि इन्द्रियाणि उपस्पृशेत्॥" इत्यत्र अप उन्नीयन्ते। यदुक्तं गोभिल-सूत्रे "इन्द्रियाण्यद्भिः संस्पृशेत्॥ नासिके कर्णावि"ति[3]।" मनुरप्याह—"खानि चैवं स्पृशेदद्भिः।" व्यासः—"ऋचो यजूंषि सामानि द्विः पिबेत् प्रीणयेत् क्रमात्। अथर्वाङ्गिरसो पूर्वं द्विः प्रमृज्याच्च यन्मुखम्[4]॥ सेतिहास-पुराणानि

---

1 मुखाद्बे., B. 2 BhavP., chap. 8, vv. 71 ff., p. 8

3 Gobhy S., 1. 2. 7-8,…चक्षुषी नासिके…This reading is missing in A and B.

4 C. द्विः प्रमाज्र्ये नखं मुखं.

वेदाङ्गानि तथोत्तरम्। खं मुखं नासिकां वायुं नेत्रे सूर्यं श्रुती दिशः॥ प्राण-ग्रन्थिमथो नाभिं ब्रह्माणं हृदयं स्पृशन्। रुद्रं मूर्द्धानमालभ्य प्रीणात्यथ शिखामृषीन्॥ बाहू कुबेर-वरुण-यमेन्द्र-वसुधानलान्। अभ्युक्ष्य चरणौ विष्णुमिन्दुं विष्णुं कर-द्वयम्॥ वासुकि-प्रमुखान्नागान् जलं क्षिपति यत् क्षितौ। येऽन्तरा बिन्दवो यान्ति भूत-ग्रामन्तु तैर्द्विजाः॥ अग्निवाय्विन्दु-सूर्येन्द्रा वसन्त्यङ्गुलि-सन्धिषु। गङ्गाद्याः सरितस्तास्तु या रेखाः कर-मध्यगाः। तले सोमश्च तीर्थञ्च स्मृतोऽतः पावनः करः॥"

भविष्ये—"यद्भूमावुदकं वीर समुत्सृजति मानवः। वासुकि-प्रमुखान्नागांस्तेन प्रीणाति भारत॥"[1] वायु-पुराणे—"क्रियां यः कुरुते मोहादनाचम्यैह नास्तिकः। भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः॥"[2] स्कान्दे—"अधोवायु-समुत्सर्गे प्रहासेऽनृत-भाषणे। मार्जार-मूषिक-स्पर्शे आक्रोशे क्रोध-सम्भवे॥ निमित्तेषु च सर्वत्र कर्म कुर्वन्नपः स्पृशेत्॥" आचमन-करणे अन्य-कर्मोपादानं स्यात्। एतेन नाचामेदित्यर्थः।

एतत्तु स्नानं प्रतिषिद्ध-तिथिं विहाय कर्त्तव्यम्। तत्राह जाबालः—"त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः। शूद्र-विट्-क्षत्रियाः स्नानं नाचरेयुः[3] कथञ्चन॥" यथासंख्यमत्र। प्रचेताः—"दर्श-स्नानं न कुर्वीत माता-पित्रोस्तु जीवतोः। नवम्याञ्च न चेत्तत्र निमित्तान्तर-सम्भवः॥ प्रतिपद्यनपत्यः

1 BhavP., ब्राह्म-पर्व chap. 3, 79 b—80 b, p. 8, v. r. यद्भूम्याच्छाद्य वारि विसर्जयति मानद।

2 w. l. a, p. 489, v. r., अनाचम्यैव…भवन्ति च…क्रिया ह्येताः।

3. नाचरेत्।

स्यात् तृतीयायामपत्नीकः। दशम्यामधनः स्नानात् सर्वं हन्ति त्रयोदशी॥ पुत्र-जन्मनि संक्रान्त्यां श्राद्धे जन्म-दिने तथा। नित्य-स्नाने च कर्त्तव्ये तिथि-दोषो न विद्यते॥ चतुर्हस्त-समायुक्तं चतुरस्रं समन्ततः। प्रकल्प्यावाहयेद् गङ्गामेभिर्मन्त्रैर्विचक्षणः॥ विष्णोः पाद-प्रसूतासि वैष्णवी विष्णु-पूजिता। पाहि नस्त्वेनसस्तस्मादा जन्म-मरणान्तिकात्॥ विष्णु-पादार्घ्य-सम्भूते गङ्गे त्रिपथ-गामिनि। धर्म-द्रवीति विख्याते पापं मे हर जाह्नवि॥ तिस्रः कोट्योऽर्ध-कोटी च तीर्थानां वायुरब्रवीत्। दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि॥ नन्दिनीत्येव ते नाम देवेषु नलिनीति च। वृन्दा पृथ्वी च सुभगा विश्वकाया शिवामृता। विद्याधरी सुप्रसन्ना तथा लोक-प्रसाधिनी। क्षेमा च जाह्नवी चैव शान्ता शान्ति-प्रदायिनी॥ एतानि पुण्य-नामानि स्नान-काले प्रकीर्तयेत्। भवेत् सन्निहिता तत्र गङ्गा त्रिपथ-गामिनी॥[1] सप्तवाराभिजप्तेन कर-सम्पुट-योजितम्। मूर्ध्नि कुर्याज्जलं भूयस्त्रि-चतुः पञ्च सप्त वा॥ स्नानं कुर्यान्मृदा तत्र ह्यामन्त्र्य च विधानतः॥ अश्व-क्रान्ते रथ-क्रान्ते विष्णु-क्रान्ते वसुन्धरे। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥

---

1 BhavP., uttara-parvan, chap. 123, v. 4, p. 455; PadmaP., op. cit. chap. 120, v. 148, p. 2 86. For other references, see MatsyaP. chap. 102, vv. 4ff; p. 23 of this book; BhavP. v. r. विष्णु-पाद-प्रसूताऽसि…विष्णु-देवता (v. 5) क्षमा पृथ्वी च विहगा…शिवा स्मृता ; PadmaP., v. r., त्राहि नस्त्वेनसस्तस्मात्…शिवा सिता। MatP., विश्वकायामृता शिवा...विद्याधरी सुप्रशान्ता तथा विश्व-प्रसादिनी। The verse विष्णु-पादार्घ्य-सम्भूते …जाह्नवि is not found in the BhavP. and the PadmaP.

उद्धृतासि वराहेण कृष्णेन शत-बाहुना ।[1] नमस्ते सर्व-लोकानां प्रभवारणि[2] सुव्रते ॥ आक्रम्य मम गात्राणि सर्वं पापं[3] प्रमोचय ॥[4] ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम् । देवा यक्षास्तथा नागा गन्धर्वाऽप्सरसोऽसुराः ॥ क्रूराः सर्पाः सुपर्णाश्च तरवो जिह्मगाः[5] खगाः । विद्याधरा जलाधारास्तथैवाकाश-गामिनः ॥[6] निराहाराश्च ये जीवाः पापे धर्मे रताश्च ये ।[7] तेषा-माप्यायनायैतद्दीयते सलिलं मया ॥ कृतोपवीती देवेभ्यो निवीती तु भवेत्ततः ।[8] मनुष्यांस्तर्पयेद् भक्त्या ऋषि-पुत्रानृषींस्तथा ॥[9] सनकश्च सनन्दश्च तृतीयश्च सनातनः । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥ सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च । देवान् ब्रह्म-ऋषीन् सर्वांस्तर्पये-दक्षतोदकैः ॥[10]

यमाय धर्म-राजाय मृत्यवे चान्तकाय च । वैवस्वताय

---

1 Not found in C. 2. वसुधारिणि BhaP. 3. A. सर्व-पापैः

4 This line is not found in BhavP. and PadmaP.

5. C. जम्भकाः ।

6 BhavP. and PadmaP. चाप्सरसो गणाः ।

7 PadmP. जिह्मकादयः, BhavP. तरवो विहगा मया विद्याधरा जलधाराः... ।

PadmaP., पाप-धर्म-रताश्च ये ; BhavP., पाप-कर्म-रताश्च ये ।

8 PadmaP., कृतोपवीती देवेभ्यो निवीती च भवेत्ततः ।

9 BhavP. ब्रह्म-पुत्रानृषींस्तथा ।

10 PadmaP., देव-ब्रह्म-ऋषीन् ; BhavP., देव-ब्रह्म-ऋषीन् सर्वांस्तर्पयेताक्षतोदकैः ।

कालाय सर्व-भूत-क्षयाय च॥ औदुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्र-गुप्ताय वै नमः॥ अपसव्यं ततः कृत्वा सव्यं जानु च भूतले। अग्निष्वात्तांस्तथा सौम्यान् हविष्मतस्तथोष्मपान्॥ सुकालिनो बर्हिषद आज्यपांस्तर्पयेत्ततः।[1] तर्पयेच्च पितॄन् भक्त्या सतिलोदक-चन्दनैः। दर्भ-पाणिस्तु विधिना हस्ताभ्यां तर्पयेत्ततः।[2]" तथाच स्मृतिः—"जपे होमे च दाने च स्वाध्याये पितृतर्पणे।[3] अशून्यन्तु करं कुर्यात् सुवर्ण-रजतैः कुशैः॥ पित्रादीन् नाम-गोत्रेण तथा मातामहानपि। संतर्प्य भक्त्या[4] विधिवदिमं मन्त्र-मुदीरयेत्॥ येऽबान्धवा बान्धवा वा येऽन्य-जन्मनि बान्धवाः। ते तृप्तिमखिलां यान्तु यश्चास्मत्तोऽभिवाञ्छति[5]॥"

अत्रायं क्रमः—नाभि-मात्रं जलं प्रविश्य "ओं नमो नारायणायेति चतुर्हस्तं चतुरस्रं पानीयं हस्तेनावच्छिद्य विष्णोरित्यादिना[6] गङ्गामावाह्य "ओं नमो नारायणाय" इति सप्तपठितेन सप्तकृत्वः पञ्चकृत्वः चतुस्त्रिर्वा कर-पुटेन मूर्ध्नि जलं क्षिपेत्। ततोऽश्वेत्यादिना[6] मृदमामन्त्र्य गायत्र्यालभ्य

---

1 BhavP., uttara, chap. 123, v. 22, अग्निष्वात्ता बर्हिषदो हविष्मन्तस्तथोष्मपाः। सुकालितास्तथा सौम्या आज्यपाः सोमपास्तथा॥ PadmaP., p. 288 सुकालिनो बर्हिषदस्तथा चैवाज्यपान् पुनः।

2 BhavP., तर्पयेन्नाम-गोत्रतः।

3 SmrSam., DaksaS., chap. 1, v. 11, p. 72 जपेहोमे तथा दाने स्वाध्याये च रत सदा।

4 BhavP. सन्तर्प्य विधिवद्भक्त्या।

5 PadmaP. "ये चास्मत्तोय-काङ्क्षिणः।"

6. Not found in C.

प्रवाहे प्रवाहाभिमुखोऽन्यत्र सूर्याभिमुखस्त्रिमज्जेत्। ततो द्विराचम्य वासः परिधाय स्वाचारेण जानुनी प्रचाल्य स्वशाखोक्तविधिना सन्ध्यामुपास्य प्राङ्मुखो "ब्रह्मा तृप्यतामि"त्यादिना चतुरोऽञ्जलीन् दद्यात्। "देवा यक्षा" इत्यादिनापि मन्त्रार्थ्येनैव दक्षिण-पाणिना अञ्जलिमेकं दद्यात्। तत उदङ्मुखो निवीती "सनकश्च" इत्यादिना एकाञ्जलिं दद्यात्। पुनः प्राङ्मुखो "मरीचिस्तृप्यतामि" त्येकाञ्जलिं तर्पयेत्। ततो दक्षिणामुखः प्राचीनावीती "अग्निष्वात्तास्तृप्यन्तामिदं जलं सतिलं तेभ्यः स्वधा नमः॥" ततः पितॄनावाह्य तर्पयेत्।

आवाहन-मन्त्रमाह—"नाभि-मात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः। आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्॥" एवममुक-गोत्रः पिता अमुक-देवशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा नमः—प्रत्यञ्जलि एवं वाक्येन दद्यात्। प्रत्येकम् अञ्जलित्रयम्। इत्थं पितामह-प्रपितामह-मातामहादित्रय-गुरु-मातुल-सकुल्य-स्निग्ध-मित्रादीन् तर्पयेत्। "ये बान्धवा" इत्येकं दद्यात्। ततः शुष्क-वासः परिधायाधरीयं वस्त्रं प्रचाल्य भूमौ कुश-त्रयोपरि पितृ-दानादीनुद्दिश्य सतिलं वस्त्रनिष्पीडनोदकं पितृ-तीर्थेन दक्षिणाभिमुखो दद्यात्। "ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः। ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्॥" इति दान-मन्त्रः। "जल-मध्ये तु यः कश्चिद् द्विजातिर्ज्ञान-दुर्बलः। निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत्॥" निष्पीडनोदकं जले न दद्यादित्यर्थः। योगियाज्ञवल्क्यः[1]—"स्नात्वैवं वाससी धौते अक्लिष्टे परिधाय च।

1 Not found in YajnSam.

अभावे धौत-वस्त्रस्य शाण-क्षौमादिकानि च ॥ कुतपो योगपट्टं वा द्विवासा येन वा भवेत् ॥" कुतपो नेपाल-कम्बलः । जावालः—"नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन ।" अत्र सदातन-निषेध-बलात् पुरुषार्थता । नरसिंह-पुराणे—"न रक्तमुल्वणं वासो मलिनञ्च प्रशस्यते । अनरक्तं दशा-हीनं वर्जयेदम्बरं बुधः ॥" उल्वणं व्यक्तं, एतच्च विशेषणं तेनात्यन्त-रक्तमित्यर्थः । उल्वणमबहुलम् इति केचित् । तथा च स्कान्दे—"अधौतेन तु वस्त्रेण नित्यं नैमित्तिकीं क्रियाम् । न फलं प्राप्नोति मुने दत्तं भवति निष्फलम् ॥ तस्य यः कुरुते दानं हव्यं कव्यञ्च नारद । भस्मन्येव हुतं यद्वत्तद्भवति नारद ॥ तस्मात् सर्व-प्रयत्नेन धौतं कार्यं विजानता । तत आचम्य विधिना आलिखेत् पद्ममग्रतः ॥ अक्षताभिः सपुष्पाभिः सतिलोदक-चन्दनैः । अर्घ्य-पाद्यं प्रयत्नेन सूर्य-नामानुकीर्त्तनैः ॥" दातव्यं इति शेषः । "नमस्ते विष्णु-रूपाय नमो विष्णु-मुखाय च । सहस्र-रश्मये नित्यं नमस्ते सर्व-तेजसे ॥ नमस्ते रुद्र-वपुषे नमस्ते भक्त-वत्सल । पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गद-भूषण ॥ नमस्ते सर्व-लोकेश सुप्तानामपि बुध्यसे । सुकृतं दुष्कृतञ्चैव सर्वं पश्यसि सर्वदा ॥ सत्यदेव नमस्तेऽस्तु प्रसीद मम भास्कर । दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते ॥" इति अर्घ्यं दद्यात् ।

"एवं सूर्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम् । द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुं गृहं व्रजेत् ।"

जीवत्-पितृकस्य पितृ-तर्पण-वर्जनमिति शेषः । विष्णु-पुराणीय-मते जीवत्-पितृकेण सप्ताञ्जलि-मात्रं देयं, देवास्तृप्यन्तामित्य-ञ्जलित्रयम्, ऋषयस्तृप्यन्तामित्यञ्जलि-त्रयम्, प्रजापतिस्तृप्यता-मित्येकाञ्जलि-मात्रम् । तर्पण-प्रयोगश्च रत्नाकरेण तर्पण-प्रकरणे

स्त्रिषवणव्रताः। एवं स्नात्वा यथोक्त-विधानेन गङ्गाधिष्ठातृ-देवताश्च सम्पूज्य बलि-विश्वदेवादिकं कुर्यात्।

अथ पाद्मे—"सकृद् गङ्गाम्भसि स्नातः पूतो गाङ्गेय-वारिणा। नरो न नरकं याति अपि पातक-राशिकृत्॥"

अद्य सर्व-पाप-क्षय-पूर्वक-नरक-गमनाभाव-कामो गङ्गाम्भसि स्नानमहं करिष्ये। तथा—"व्रत-दान-तपोयज्ञाः पवित्राणीतराणि च। बिन्दोरेकस्य गङ्गाया न समान इति श्रुतिः॥"

अद्य व्रत-दान-तपोयज्ञादि-पवित्र-कर्म-जन्य-फलाधिक-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। ब्रह्माण्डे—"प्रसङ्गेनापि गङ्गा या मोक्षदा त्ववगाहिता[1]॥" अद्य मोक्ष-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। अवगाहनमत्रोपलक्षणम्।

स्कान्दे—"गङ्गैव परमो हेतुर्मुक्तये भव-सङ्गिनाम्। कलि-काले विशेषेण स्नाता पातकिनामपि॥" अद्य भव-सङ्गाभाव-पूर्वक-मुक्ति-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये। ब्रह्माण्डाग्नेययोः—"दृष्टा तु हरते पापं स्पृष्टा तु त्रिदिवं नयेत्।[2] प्रसङ्गेनापि गङ्गा या मोक्षदा त्ववगाहिता[3]॥" अद्य मोक्ष-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये।

भविष्ये—"गङ्गा-स्नानाचरो नित्यं वसेत् स्वर्गे मुदान्वितः॥"

अद्य स्वर्गाधिकरणक-मुदितत्व-स्वनित्य-वास-कामो गङ्गायां स्नानमहं करिष्ये। नित्यम् आप्लवं यावत्॥ ब्रह्माण्डे—"अन्य-

---

1 Not found in BrahmandaP.

2 PadmaP., लभते दिवम्।

3 Not found in Brahmanda and Āgneya purāṇas.

स्थाने कृतं पापं गङ्गा-तीरे प्रणश्यति। गङ्गा-तीरे कृतं पापं गङ्गा-स्नानात् प्रणश्यति[1] ॥"

अथ गङ्गा-तीर-कृत-पाप-नाश-कामो गङ्गायां स्नानमहं करिष्ये। पाप-क्षय-कामो वा। भविष्ये—"मेरु-मन्दर-तुल्योऽपि राशिः पापस्य कर्मणः। गङ्गा-स्नानेन दग्धः स्यात् तृण-राशिरिवानलैः॥" अथ मेरु-मन्दर-तुल्य-पाप-राशि-दाह-कामो गङ्गायां स्नानमहं करिष्ये। ब्रह्माण्डे—"रात्रौ दिवा च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः। स्नात्वाऽश्वमेधजं पुण्यं गृहेऽप्युद्धृत-तज्जलैः॥"[2]

अथाश्वमेध-यज्ञ-जन्य-फल-सम-फल-प्राप्ति-काम उद्धृत-गङ्गोदकैः स्नानमहं करिष्ये। अयतानामत्राधिकारिता। दिवा रात्रौ च सन्ध्यायां वा प्रसङ्गात् प्राप्तानामपि स्नानादेस्तदेव फलम्। वन-पर्वणि—"अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः। स-मुक्तः सर्व-पापेभ्यो गङ्गायान्तु स मुक्तवान्॥"

अथालक्ष्मी-नाश-पूर्वक-सर्व-पाप-विमुक्ति-कामो गङ्गायां स्नानमहं करिष्ये। भविष्ये—"ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्च-पातकी। सर्वतो निष्कृतिं यान्ति गङ्गा-स्नानान्न संशयः॥" अथ ब्रह्म-वध-सुरा-पान-गो-वध-पञ्च-पातक-नाश-कामो गङ्गायां स्नानमहं करिष्ये। ब्रह्माण्डाग्नेय-दानधर्मेषु—"स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनः। गतिर्भवति या पुंसां न सा क्रतु-शतैरपि[3] ॥" अथ बहु-क्रतु-शत-जन्य-गत्यधिक-गति-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। भविष्ये—"कपिला-कोटि-

1 Not found in BrahmāṇḍaP. Found in PadmaP., chap. 62, v. 68. p. 737, v. r. गङ्गा-स्नानेन नश्यति।

2 Not found in BrahmāṇḍaP. 3 Not found.

दानादि गङ्गा-स्नानं विशिष्यते ॥" अद्य कपिला-कोटि-दान-जन्य-फल-विशिष्ट-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। तथा—"यत् फलं सर्व-तीर्थेषु पुण्येष्वायतनेषु च। तत् फलं लभते सर्वं गङ्गा-स्नानाद संशयः ॥"

अद्य सर्व-तीर्थ-बहु-पुण्यायतन-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये ॥ आग्नेये—"ये वै ममांश-सम्भूता जले स्नानादिकां क्रियाम्। करिष्यन्तीह यास्यन्ति भित्त्वा ते मण्डलं मम[1] ॥"

अद्य सूर्य-मण्डल-भेदन-पूर्वक-गमन-कामो गङ्गायां स्नानमहं करिष्ये। ब्रह्माण्डे—"स्पृष्ट्वा स्वर्गमवाप्नोति पीत्वा स्वर्गमवाप्नुयात्। गङ्गा-स्नानेन मुक्तः स्यात् परमाप्नोति पूरुषम् ॥"[2]

अद्य परम-पुरुषत्व-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये ॥

तथा—"स्नाता जन्म-सहस्राणि हन्ति गङ्गा कलौ युगे ॥"

अद्य जन्म-सहस्र-कृत-पाप-क्षय-कामो गङ्गायां स्नानमहं करिष्ये ॥

ब्रह्माण्डे—"प्रभासे गो-सहस्रेण[3] राहु-ग्रस्ते निशाकरे।
यत् फलं पाण्डव-श्रेष्ठ गङ्गायां तद्दिने दिने ॥"

अद्य प्रभासाधिकरणक-राहु-ग्रस्त-निशाकर-कालीन-गो-सहस्र-दान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। बहु-दिवस-स्नाने तु प्रतिदिनमिति[4] योज्यम्। गङ्गा-स्वित्यादावप्येवम् ॥

---

1 Not found. 2 Not found.
3 C. गो-सहस्रस्य 4 A. प्रतिदिनमपि।

स्कान्दे—"सद्यः-पाप-हरा सैव सद्यः शुद्धिकरी परा।
महापुण्य-प्रदा सद्यः स्वर्ग-मोक्ष-प्रदैव सा॥"

अद्य सद्यः-पाप-नाश-पूर्वक-सद्यः-शुद्धि-सद्योमहा-पुण्य-स्वर्ग-मोक्ष-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये॥

नारदीये—"कोटिश्चष्टासु दशसु तीर्थानां यत् फलं भवेत्।
तत् समस्तमिहैकत्र गङ्गायां लभते नरः॥"

अद्याष्टादश-कोटि-तीर्थ[1]-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये॥

स्कान्दे—"तिस्रः कोट्योऽर्ध-कोटी च तीर्थानां वायुरब्रवीत्।
दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि॥"

अद्य सार्ध-त्रि-कोटि-तीर्थ-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये॥ मूल-वाक्यन्तु वीक्षण-प्रकरणे लिखितम्॥

अथ शिव-नदी-स्नानम्।

गङ्गायाः सदृशत्वेन प्रस्तावौचित्यादत्र लिख्यते। [2]शिव-लिङ्ग-समीपस्था नद्यादयः सर्वे गङ्गा-सदृशाः[2]। लैङ्गे[3]—

"अर्ध-क्रोशं शिव-क्षेत्रं शिव-लिङ्गात् समीपतः[4]। स्वयम्भूस्तस्य मानं हि तस्य बाणस्य सुव्रताः॥ स्वायम्भुवे तदर्धं स्यादार्षेये च तदर्धकम्। मानुषे च तदर्धं स्यात् क्षेत्रमानं द्विजोत्तमाः॥ [5]शिव-क्षेत्र-समीपस्था नद्यः सर्वा द्विजोत्तमाः। वापी-कूप-तडागाद्य शिव-तीर्थमिति स्मृताः॥ गङ्गा-स्नान-समं पुण्यं लभते नात्र संशयः। स्नात्वैतेषु महायानैः शिव-लोके महीयते॥"

1. B. अष्टादश-तीर्थं। 2-2. Omitted in B.
3. B. अथ लिङ्ग-पुराणे। 4. B. समन्ततः।
5-5. B. omitted.

अद्य गङ्गा-स्नान-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामः[5] शिव-लिङ्ग-समीपस्थ-नद्यां स्नानमहं करिष्ये । शिव-लिङ्ग-समीपस्थ[1]-वापी-कूप-तडागानामन्यतम-स्नानेऽप्येतदेव[2] फलम् ।

स्कान्दे—"पञ्च-क्रोश-प्रमाणेषु शिव-क्षेत्रेषु देहिनाम् । मृतानामेव[3] रुद्रत्वं पापिष्ठानामपीश्वरी ॥" ईश्वरी उमा-महेश्वरी रुद्रत्वं दत्त इत्यर्थः ॥

लैङ्गे—"अर्ध-क्रोशं शिव-क्षेत्रं शिव-लिङ्गात् समन्ततः । यस्त्यजेद्दुस्त्यजान् प्राणाञ्छिव-सायुज्यतां व्रजेत् ॥" भविष्ये—"क्रोश-मात्रं परं स्थानं शिवस्य परमेष्ठिनः । देहिनां तत्र पञ्चत्वं शिव-सायुज्य-कारणम् ॥" शिव-धर्मे—"ग्रामे वा यदि वाऽरण्ये स्थलेऽपि वा जलेऽपि वा । यत्र वा दृश्यते लिङ्गं सर्व-तीर्थानि तत्र वै ॥" लैङ्गे—"पुण्य-क्षेत्राणि यान्यत्र पुण्य-तीर्थानि यानि च । तस्मात्तत्-कोटि-गुणितं प्राण-त्यागः शिवालये ॥"

शिव-समीपस्थ-प्रस्रवण-स्नानस्य—"त्रिः प्रस्रवणे स्नात्वा शिव-तीर्थे सत्तरः । शिव-सायुज्यमाप्नोति नात्र कार्या विचारणा ॥"[4]

अद्य शिव-सायुज्य-प्राप्ति-कामनया शिव-लिङ्ग-समीपस्थ-प्रस्रवणे त्रिः स्नानमहं करिष्ये ।

शिव-धर्मे—[5]शिव-पुरोवर्ति-क्षेत्रस्थ-जल-स्नाने ॥ "शिव-क्षेत्र-समीपस्थं यत्तोयं पुरतः स्थितम् । शिव-गङ्गेति विज्ञेयं तत्र स्नात्वा दिवं व्रजेत् ॥" [6]अद्य स्वर्ग-प्राप्ति-कामनया भगवतः शिवस्य पुरःस्थिताभ्यःशिव-गङ्गायां स्नानमहं करिष्ये ।[6]

1. B. तत्-समीपं । 2. C. तडागादि-स्नानेऽप्येतदेव ।
3. C. स्नातानामेव । 4. स्कन्दीयम् अद्य…A.
5. B. omitted. 6-6. B. स्वर्ग-काम इति स्नायात् ।

अथ पुण्य-काल-स्नान-प्रकरणम्[1]।

तत्र तिथि-स्नानम्। तत्र तिथि-कृत्ये चान्द्र-सौर-व्यवस्थामाह, "तिथि-कृत्यन्तु चान्द्रे वे"ति ब्रह्म-पुराण-स्वरसात्। "[2]मासो रविः स्यात् प्रतिमासि भोगः[2], शुक्लादि-दर्शान्तमतेव चान्द्रः। त्रिंशद्दिनानामत्र[3] सावनाख्यो भानोर्भवेत् तत्-परिवर्त्तनेन॥" "शुक्लादि-दर्शान्तश्चान्द्रस्त्रिंशद्दिनस्तु सावनो मासः। रवि-संक्रान्ति-चिह्नश्च सौरोऽपि निगद्यते।" "सौर-मासो विवाहादौ यज्ञादौ सावनः स्मृतः।" [4]यत्र माघ-फाल्गुनादि-विशेष-श्रवणम् तत्र चान्द्रेणैव स्नानादिकम्, यत्र विशेष-श्रवणं नास्ति तत्र सामान्येन तिथि-मात्रमुद्दिश्य स्नायात्[4]। "प्रतिसंवत्सर-श्राद्धे चान्द्रो मासः प्रशस्यते।" दक्षः "चान्द्रेण तिथि-कृत्यन्तु यथाविहितमाचरेत्।" विशेषे तु इयान् विशेषः। सामान्य-तिथि-स्नाने तु विशेषाभाव इत्यर्थः। भविष्ये—"कृष्णाष्टम्यां सहस्रन्तु शतं स्यात् सर्व-पर्वसु"[5]॥ [6]केचित्तु कृष्णाष्टमी माघ-सम्बन्धिनीति वदन्ति[6]। "अमावस्या शत-गुणं सहस्रन्तु दिन-क्षये"॥

अद्य कृष्णाष्टम्यां सहस्र-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये॥ चतुर्दशी-पञ्चदशी-संक्रान्तीनामेकतरस्यां स्नानेऽप्येतदेव फलम्।

भविष्ये—"संक्रान्त्यां पक्षयोरन्ते ग्रहणे चन्द्र-सूर्य्ययोः।
गङ्गा-स्नातो नरः कामाद् ब्रह्मणः सदनं व्रजेत्॥"

---

1. B. अथ तिथि-स्नान-प्रकरणम्। 2-2. B. omitted.
3. C. त्रिंशं दिनानामत्र। 4-4. B. A. omitted.
5 TithiT., P. 397, l. 10. 6-6. B. omitted.

अद्य पचान्ते ब्रह्म-सदन-व्रजन-कामो[1] गङ्गायां स्नानमहं करिष्ये ।[2] [3]मात्स्ये—"आ-का-मा-वैष्वनन्तकम् ।"[4] आषाढी-कार्त्तिकी माघी-वैशाखी-पूर्णिमास्विव्यर्थः । अद्याषाढ्यां पौर्णमास्यामनन्त-पुण्य-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये । अन्यासामप्येकतरस्यां स्नानेऽतदेव फलम् ।

यमः—"शोभ्यः किमशनं दद्याद् दीपं दद्याच्चतुष्पथे ।
पचान्ते स्रोतसि स्नायात् तेन नायाति मत्-पुरम् ॥"[5]

अद्य यम-पुर-गमनाभाव-कामः पचान्ते गङ्गायाः स्रोतसि स्नानमहं करिष्ये ।

भविष्ये—"येयं भाद्रपदे शुक्ला षष्ठी भरत-सत्तम । स्नान-दानादिकं सर्वमस्यामक्षयमुच्यते ॥"[6]

अक्षयम् आभूत-संप्लव-स्थायि । अद्य भाद्र-शुक्ल-षष्ठ्यामक्षय-पुण्य प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये[3] ।

अथ माघ-सप्तमी-स्नानम् ।

स्मृतिः—"अरुणोदय-वेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्य-ग्रह-शतैः समा ॥"[7]

---

1. B. महापातक-नाश-कामः ।

2. B. Addt. r. ब्रह्माण्डाग्नेय-दान धर्मे—"स्नातानां शुचिभिस्तोयै-र्गाङ्गेयैः प्रयतात्मनाम् । गतिर्भवति या पुंसां न सा क्रतु-शतैरपि ॥" अद्य क्रतु-शत-जन्य-गत्यधिक-गति-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये ।

3-3 B. omitted

4 Not found in MatP. Found in TithiT. p. 397, l. 11.

5 Not found in यम-संहिता or यम-स्मृति ।

6 Not found in BhavP.

7 TithiT., p. 146, l. 8; said to be taken from the BhavP.

अथ शुक्ल-माघ-सप्तम्यां गङ्गाधिकरणक-बहु-शत-सूर्य-ग्रह-कालीन-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामः अरुणोदय-वेलायां गङ्गा-स्नानमहं करिष्ये ।[1]

अथ नन्दादि-स्नानम् ।

नन्दा तु उभय-पक्ष-जाताः प्रतिपत्-षष्ठ्येकादश्यः ।[2]

भविष्ये—"मम-जन्मसु यद् भुक्तं पतितान्नञ्च तैः सदा । संसर्गश्च कृतः पञ्च पातकानि महान्ति च ॥ तथाऽनिर्वचनीयानि पापानि क्षयतामियुः । रजस्वलायाः स्पृष्टान्न-भोजनेनापि यद् भवेत् ॥ सततासत्य-भाषेण स्वर्णस्य हरणेन च । मणेश्चापि च रत्नस्य सामान्य-सकलस्य च ॥ वस्तुनश्चापि हरणैर्वेधैः सख्यु हिं-

1. B. add. r. भविष्ये, कपिला……अथ कपिला-कोटि-दान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये । "यत् फलं सर्व-तीर्थेषु सर्वेष्वायतनेषु च……स्नानाच्च संशयः ॥" अथ सर्व-तीर्थ-बहु-पुण्यायतन -जन्य -फल -सम-फल -प्राप्ति -कामो गङ्गा-स्नानमहं करिष्ये । "……जले स्नानादिकां क्रियां । करिष्यन्तीह यास्यन्ति भित्त्वा ते मम मण्डलम् ॥" अथ सूर्य-मण्डल-भेदन-कामो गङ्गा-जले स्नानमहं करिष्ये । "स्पृष्ट्वा स्वर्गमवाप्नोति पीत्वा स्वर्गमवाप्नुयात् । गङ्गा-स्नानेषु……परमाप्नोति पुरुषम् ॥" अथ परम-पुरुष-प्राप्ति-कामः…… "हन्ति गङ्गा कलौ युगे ॥" अथ जन्म सहस्र-कृत……पाप-नाश-कामः । नारदीये—कोटिष्वष्टासु दशसु ते … दश…गङ्गायां लभते नरः ॥ अथ अष्टादश-कोटि-तीर्थ-जन्य-फल-सम-फल-प्राप्ति-कामः । सार्ध-कोटि-तीर्थ-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नायात् । स्कन्द पुराणम् यथा……संकल्प्य नित्यं स्नायात् । विशेष-तिथि-योगादिषु च विशेष-वचनं लिख्यते । तत्र प्रकरणे ॥

2. B. अथ नन्दा प्रतिपत्-षष्ठ्येकादश्युभय-पक्षीयास्तिथयो ज्ञाताः ।

जातयः। मित्र-हिंसा-विप्र-हिंसा-मातृ-हिंसादिभिश्च यत्॥ जनितानि महान्तीह रौरवादीनि यानि च। तेष्वनवरतं विप्रास्ताडनन्तु निवारयेत्॥ यमस्य किङ्कराणां वै पापमाजन्म यत् कृतम्। बाल्य-यौवन-वार्धक्य-दशा-पाप-क्षयो भवेत्। ब्रह्म-पुरे वसेद् दृष्ट्वा हंसन्तु परमन्तथा॥" तथा, "धेनूनां कपिलानान्तु लक्षं दत्त्वा द्विजन्मने।[1] चतुर्वेदाधीतकाय[2] तत् फलं लभते नरः॥ श्रीमन्नारायणस्येह वसते दक्षिणे भुजे। मर्त्य-लोके ततो जन्म ततो गुणाश्रयो भवेत्॥ भुङ्क्ते सर्वं सुखं भोगं यशश्चाप्नोति मानवः। गङ्गा-स्नानेन नन्दायां नात्र कार्या विचारणा॥"[3] भविष्ये—[4]"उभयोः पक्षयोर्जातास्तिथयस्तु तिथयः शुभाः। एकादशी तथा षष्ठी प्रतिपच्च निबोधत॥ नन्दा तु कथिता सद्भिः सर्वं पाप-हरा शिवा[4]॥"

अद्य सप्त-जन्मावच्छेद-पतितान्न-भक्षण[5]-पतित-संसर्ग-ब्रह्म-हत्यादि-पञ्च-महापातकानिर्वचनीय-पाप-क्षय-रजस्वला-स्पृष्टान्न-भोजन-सततासत्य-भाषण-स्वर्ण-मणि-रत्नापहरण-सामान्य-सकल[6]-वस्त्वपहरण--सखि--वध--मित्र-हिंसा-विप्र--हिंसा-मातृ--हिंसादि-जनित-महा-रौरवाद्यनवरत-यम-किङ्कर-ताडन-निवारणाजन्म-गत-बाल्य-यौवन-वार्द्धक्य-दशा-पाप-क्षय-ब्रह्म-लोकाधिकरणक-परम-हंस-दर्शन-पूर्वक-वासाधीन-चतुर्वेद-ब्राह्मण-संप्रदान-कपिला-धेनु-

1. B. द्विजोत्तमे। 2 V. r. op. cit. चतुर्वेदानधीताय।

3 PrayT., chap. गङ्गा-माहात्म्य, section नन्दा-स्नान, p. 86; v. r., पतितान्नं च तैः सह--हरयो वधे सख्यं द्विजोत्तमाः। Pray T. v. r. कपिलानाञ्च···नन्दा-स्नानेन गङ्गायाम्।

4-4. Omitted in B. 5. B. भोजन

6. A. no सकल।

लक्ष-दान-जन्य-फल-सम-फल-श्रीमन्नारायण-दक्षिण-भुज-वास-तदुत्तर-मर्त्य-लोकीय-जन्म-गुणाश्रयत्व-सर्व-सुख-भोग-यशःप्राप्ति-कामो नन्दायां गङ्गायां स्नानमहं करिष्ये ॥

अथ युगाद्या-स्नानम् ॥

युगाद्या-स्नानमाह मात्स्ये—"वैशाख-मासस्य सिता तृतीया नवम्यसौ कार्तिक-शुक्ल-पक्षे। नभस्य-मासस्य तमिस्र-पक्षे त्रयोदशी पञ्चदशी च माघे ॥ एता युगाद्याः कथिताः पुराणैरनन्त-पुण्या-स्तिथयश्चतस्रः। पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥ श्राद्धं कृतं तेन समा-सहस्रं रहस्यमेतन्मुनयो वदन्ति[1] ॥"

यद्यपि पञ्चदशी-पदेनामावास्या-पौर्णमास्योर्ग्रहणमापद्यते तथापि नभस्य-मासस्य तमिस्र-पक्षे त्रयोदशी-साहचर्यादमा-वास्याया एव ग्रहणम्।

तथा च ब्राह्मे—"नवम्यां शुक्ल-पक्षस्य कार्त्तिके निरगात् कृतम्।" निरगात् समपद्यतेति, अव्ययानामनेकार्थत्वात्। "त्रेता सित-तृतीयायां वैशाखे समपद्यत। दर्शे तु माघ-मासस्य प्रवृत्तं द्वापरं युगम् ॥ कलिः कृष्ण-त्रयोदश्यां नभस्ये मासि निर्गतः ॥" निर्गतः आगतः अव्ययत्वात् पूर्ववत्। तथा च स्मृतिः—"द्वे शुक्ले द्वे तथा कृष्णे युगाद्ये परिकीर्तिते। शुक्ले पौर्वाह्णिके श्राद्धे कृष्णे वै चापराह्णिके ॥"

यच्च ब्रह्म-पुराणोक्तं माघ-पूर्णिमा युगाद्येति तद् युग-भेदेन। "वैशाखे शुक्ल-पक्षस्य तृतीयायां कृतं युगम्। कार्त्तिके शुक्ल-पक्षे

1 Tithi T., chap. on युगाद्या, p. 481, v. r. तु या तृतीया। तिथयश्चतस्रः। उपप्लवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययन-द्वये च। पानीयमप्यत्र...पितरो।

च त्रेता च नवम्येऽहनि ॥ अथ भाद्रपदे कृष्ण-त्रयोदश्यान्तु द्वापरम्। माघे तु पौर्णमास्यां वै घोरं कलि-युगं स्मृतम् ॥ युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्तिताः[1]। वैशाखे मासि राजेन्द्र शुक्ल-पक्षे तृतीयिका ॥ अक्षया सा तिथिः प्रोक्ता कृत्तिका-रोहिणी-युता। तस्यां दानादिकं पुण्यमक्षयं समुदाहृतम् ॥[2] संवत्सर-फलं तस्य नवम्यां कार्त्तिके तथा। [3]मन्वादौ तु युगादौ तु मास-त्रय-फलं लभेत् ॥[4]"

अथ वैशाख-मासस्य सित-तृतीयायां युगादौ वैध-निरन्तर-मास-त्रयावच्छिन्न-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। अन्य-युगाद्यास्वप्येवम्।

अत्र कार्त्तिक-शुक्ल-नवम्यां वैध-निरन्तर-संवत्सरावच्छिन्न-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। संवत्सरोऽत्र वर्ष-पर्यायो न तु वर्ष-विशेषः।

मन्वादि-स्नानम्।

भविष्य-मात्स्ययोः—"अश्वयुक्-शुक्ल-नवमी द्वादशी कार्त्तिके तथा। तृतीया चैत्र-मासस्य तथा भाद्रपदस्य च ॥ फाल्गुनस्याप्यमावस्या पौषस्यैकादशी तथा। आषाढस्यापि दशमी माघ-

---

1 Tithi T., chap. on युगाद्या, p. 480, l. 10f., वैशाखे···कीर्त्तिता ; v. r. वैशाखे शुक्ल पक्षे तु···कार्त्तिके शुक्ल-पक्षे तु त्रेताद्य···माघे च···युगाद्यास्तेन विश्रुताः।

2 B. add. r. भविष्ये, and अक्षयाक्षय-पुण्य-प्राप्ति-काम इति वाक्यं,

3 Op. cit., p. 127, l. 1f.

4 B. वैशाखे शुक्ला तृतीया कार्त्तिके शुक्ला नवमी भाद्रे कृष्ण-त्रयोदशी माघेऽमावस्या एतास्तस्रो युगाद्याः।

5 Op. cit., p. 431, l. 6f., v. r···मन्वादौ च युगादौ च।

मासस्य सप्तमी ॥ श्रावणस्याष्टमी कृष्णा तथाषाढ़ी च पूर्णिमा। कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा। मन्वन्तराद्यस्त्वेता दत्तस्याक्षय-कारिकाः ॥[1]

अद्य[2] मास-त्रयावच्छिन्न-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो मन्वादौ गङ्गायां स्नानमहं करिष्ये। मूल-वचनन्तु युगाद्यायाम्। [3]एवमन्येषां मन्वन्तरादीनामेकतरस्मिन् स्नानेऽप्येतदेव फलम्।[3]

दिन-क्षय-स्नानम्।

स्कान्द-भविष्ययोः—"अमावस्यां शत-गुणं सहस्रन्तु दिन-क्षये॥"[4] दिन-क्षयस्त्र्यहस्पर्शः[5]। तत्र दिन-क्षयमाह स्कान्द-राजमार्त्तण्डयोः[6]"एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिन-क्षयः प्रोक्तस्तत्र साहस्रिकं फलम्॥" तथा—"त्र्यहस्पृग् दिवसश्चैव महापुण्यतमः स्मृतः। तिथि-त्रयस्य संस्पर्शात् त्र्यहस्पृक् समुदाहृतः॥"[7]

अद्य दिन-क्षये सहस्र-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये।

अथ नक्षत्र-स्नानम्॥

ब्रह्माण्डे—"संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्र-सूर्य्ययोः।
पुष्ये स्नात्वा तु गङ्गायां कुल-कोटीः समुद्धरेत्॥"[8]

---

1. Op. cit. chap. मन्वन्तरा, p. 154, l. 2f.…द्वादशी कार्त्तिकी तथा…तथा माघस्य सप्तमी…तथाषाढ़स्य पूर्णिमा…पञ्चदशी सिता।
2. B. वैध-निरन्तर।　　3-3. B. omitted
4. Pray., p. 83, l. 12, "भविष्ये"।
5. B. दिनक्षयं त्र्यहस्पृक्　　6. Omitted in B.
7-7. B. omitted　　7. Tithi T, p. 348, l. 7f.
8 PadmaP., chap. 62, p. 736, v. 30, 2nd line, पुष्ये स्नात्वा

श्रद्य पुष्य-नक्षत्रे बहु-कुल-कोटि-समुद्धरण-कामो गङ्गायां स्नानमहं करिष्ये। संक्रान्ति-व्यतीपात-ग्रहणानामन्यतरस्मिन् स्नानेऽप्येतदेव फलम्। भविष्ये—

"श्रात्मनो जन्म-नक्षत्रे गां गते जाह्नवी-जले।
नरः स्नात्वा तु गङ्गायां कुल-कोटीः समुद्धरेत्॥"[1]

श्रद्यात्मनो जन्म-नक्षत्रे बहु-कुल-कोटि-समुद्धरण-कामो गङ्गायां स्नानमहं करिष्ये। गारुड-भविष्ययोः—

"पुष्ये वा जन्म-नक्षत्रे व्यतीपाते तु वैधृतौ।
श्रमावस्यां नदी-स्नानं हरत्याजन्म-दुष्कृतम्॥"[2]

नद्यत्र प्रकरणाद् गङ्गैव। श्रद्य जन्म-नक्षत्रे श्राजन्म-कृत-दुष्कृत-हरण-कामो गङ्गायां स्नानमहं करिष्ये। पुष्य-व्यतीपात-वैधृत्यमावस्यास्वेकतरस्यां स्नानेऽप्येतदेव फलम्। [3]भविष्ये—

"जन्मर्क्षे च कृतं स्नानं गङ्गायां भक्ति-भावतः।
श्रा जन्मनः कृतं पापं तत्-क्षणादेव नश्यति॥"

श्रद्य जन्म-नक्षत्रे जन्म-प्रभृति-कृत-पाप-क्षय-कामो गङ्गायां स्नानमहं करिष्ये।[3]

तत्रैव स्त्रीणां शतभिषा-स्नानं नास्ति। यदाह प्रचेताः—

---

तु गङ्गायां कुल-कोटिं; Pray T., p. 84. l. 12f., ब्रह्माण्डे; TithiT., p. 84, l. 12f. ब्रह्माण्डे; TithiT., p. 348, l. 11f, पुण्ये स्नात्वा च।

1 Pray T. chap. गङ्गा-माहात्म्य, p. 85, l. 8; जाह्नवी-गाङ्गते दिने, "गङ्गाकृत-ग्रन्थे भविष्य-पुराणे"। PadmaP., chap. 62, v. 49, p. 788, v. r. स्व-कुलंच समुद्धरेत्।

2 Tithi T., p. 433, l. 5, from पैठीनसि। V. r. पुष्ये तु... व्यतीपाते च...पुनात्यासप्तमं कुलम्। श्राजन्म-दुष्कृतमिति ज्योतिषे पाठः।  3-3. Omitted in B.

"स्नानं कुर्वन्ति या नार्यश्चन्द्रे शतभिषां गते। सप्त-जन्म भवेयुस्ता विधवा दुर्भगा ध्रुवम्[1] ॥ दधति शतभिषायां स्नानवत्यो युवत्यो दयित-जनित-तोष-श्लेष-विश्लेष-दुःखम्। धनमिव कृपणानां जन्म मत्रापि तासां विफलति कुच-कुम्भः कुक्षि-कुम्भ-स्थलानाम् ॥ हठाच्छतभिषा-स्नानं नारीणां यदि जायते। पूजयेत् स्वामिनं तत्र आत्मनः सर्व-सत्कृतम् ॥"

वराहः—"रोहिणी-शुक्र पुनर्वसूत्तरे या बिभर्ति नव-वस्त्र-भूषणम्।
सा न योषिदवलम्बते पतिं स्नानमाचरति या च वारुणे ॥"

अथ योग स्नानम्।

वृद्धवसिष्ठः—"श्रवणाश्वि-धनिष्ठार्द्रा-नाग-दैवत-मस्तके। यद्यमा रवि-वारेण व्यतीपातः स उच्यते ॥"[2] नाग-दैवतम् अश्लेषा, मस्तकं मृगशिरः।

अद्य व्यतीपाते बहु-कुल-कोटि-समुद्धरण-कामो गङ्गायां स्नानमहं करिष्ये। मूल-वचनन्तु नक्षत्र स्नाने।

भविष्ये—"चतुर्दश्यां यदा युक्तो व्यतीपातेन चन्द्रमाः। तदा पुण्य-तमः कालो देवानामपि दुर्लभः ॥ तदा यः स्नाति गङ्गायां भक्त्या तत्-फलमाप्नुयात्। यत्र तत्र विपन्नोऽपि गङ्गा-मरणजं च तत् ॥"[3]

अद्य चतुर्दश्यां व्यतीपात-युक्त-चन्द्रमसि 'गङ्गा-मरण-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये।

1 Op. cit., p. 349, l. 8 f.

2 Pray T., p. 85, l., f, "वृद्धमनुः"।

3 Pray T., p. 85, l. 4, चतुर्दश्यां यदा योगो...चान्द्र्या... विपन्नोऽपि गङ्गा-मरणजस्तु सः। Then Raghunandana says, "व्यतीपातेन चन्द्रमा इति गङ्गा-वाक्यावलयुक्त-पाठोऽनन्वितत्वाद्धेयः।"

4. B. यत्र तत्र मरणेनापि गङ्गा...।

"द्वादश्यां श्रवणे ऋक्षे षष्ठ्यां पुष्य-योगतः। आर्द्रायाञ्च चतुर्दश्यां गङ्गा-स्नानं सु-दुर्लभम् ॥[1] वैशाखे पूर्णिमा वा स्यान्माघे वै कार्त्तिके तथा। तथा माघी त्वमावास्या गङ्गायान्तु सुदुर्लभा ॥"

अद्य श्रवणर्क्ष-युक्त-द्वादश्यां सु-दुर्लभ-[पुण्य] प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। एवमन्यासामपि यथानामोल्लिख्य स्नायात्।

भविष्ये—"कृष्णाष्टम्यां यदा त्वार्द्रा व्यतीपातश्च वै तदा। गङ्गायां दुर्लभं स्नानं योगोऽप्येष सु-दुर्लभः ॥ यो माघे दैव-योगेन तदा स्नानं विधानवित्। लभते चेत् स सद्यो वै जातिं स्मरति पौर्विकीम् ॥ सर्व-यज्ञ-तपोध्यान-फलमाप्नोति तत्-क्षणात्। सर्व-शास्त्रार्थ-विज्ञाता अरोगश्च सदा भवेत् ॥"

अद्यार्द्रा-नक्षत्र-युक्त-माघ-कृष्णाष्टम्यां सद्यः पूर्व-जाति-स्मरण-पूर्वक-सर्व-यज्ञ-तपोध्यान-जन्य-पुण्य-सम-पुण्य-सर्व-शास्त्रार्थ-विज्ञातृत्व-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये। माघेतरे तु दुर्लभ-पुण्य-प्राप्तिः फलम्।

स्कान्दे—"शनैश्चरस्य वारेण वारेणाङ्गारकस्य च। कृष्णाष्टमी-चतुर्दश्योः पुण्यां गतिमवाप्नुयात् ॥"[2]

अद्य शनैश्चर-वाराधिकरणक-कृष्णाष्टम्यां पुण्य-गति-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये। अद्याङ्गारक-वाराधिकरणक-चतुर्दश्यां पुण्य-गति-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। दानादीनामन्यतमस्य करणश्चैतदेव फलम्।

तथा—"सोमवारे त्वमावस्या आदित्याहे च सप्तमी। चतुर्थी

1 Op. cit., p. 83, l. 9f, v. r. द्वादश्यां श्रवणर्क्षे तु।

2 Tithi T., P. 57, l. 11 f. "ज्योतिषे।" V. r. कृष्णाष्टमी-चतुर्दश्यौ पुण्यात् पुण्यतरे स्मृते।

भौम-वारे च अष्टमी च बृहस्पतौ ॥ अत्र यत् क्रियते पापमथवा धर्म-सञ्चयः। षष्टिं वर्ष-सहस्राणि प्रतिजन्म तदक्षयम् ॥"[1]

अथ सोम-वारे अमावस्यायाम् आदित्याह्ने सप्तम्यां वा भौम-वारे चतुर्थ्यां वा बृहस्पतौ अष्टम्यां वा षष्टि-वर्ष-सहस्रावच्छिन्न-स्वर्ग-वास-पूर्वक-प्रतिजन्माक्षय-धर्म-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये।

एतेषु स्नान-दानादि-सर्व-पुण्य-जनक-कर्मणि कृते फलमेवम्। अधर्मे तु कृते षष्टि-सहस्र-वर्ष-नरक-वास-पूर्वक-प्रति-जन्माक्षया-धर्म-प्राप्तिः फलम्।

प्रचेताः—"अमावास्यां यदा वारो भवेद् भूमि-सुतस्य वै। गो-सहस्र-फलं दद्यात् स्नान-दानेन जाह्नवी ॥"[2]

अथ भूमि-सुत-वारे अमावस्यायां गो-सहस्र-दान-जन्य-फल-सम-फल-प्राप्ति-कामो जाह्नवी-स्नानमहं करिष्ये। वस्तु-मात्र-दानेऽप्येतदेव फलम्। तथा

"सिनीवाली कुहूर्वापि यदि सोम-दिने भवेत्।
गो-सहस्र-फलं दद्यात् स्नानं यन्मौनिना कृतम् ॥"[3]

अथ सोम-दिने सिनीवाल्यां कुह्वां वा गो-सहस्र-दान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। अस्यां सामान्य-जलाधिकरणक-मौन-स्नानादप्येतदेव फलम्। एतच्च मौनम् अरुणोदयादारभ्य स्नान-पर्यन्तं कार्यम्। वचनान्तरेण [4]स्नान-मात्रे तत्र मौनस्य स्वयमेव सिद्धत्वात्। यदुक्तं स्कान्दे—

1 Op. cit, p. 157, l. 13 f., v. r. सोम-वारेऽप्यमावस्या... चतुर्थ्यङ्गार-वारे च...षष्टि-जन्म-सहस्राणि।

2 Op. cit, p. 433, l. 8, "व्यासः"; v. r. अमायान्तु स्नान-मात्रेण।

3 Op. cit, l. 9; v. r. कुहर्वाऽपि। 4. C. न तु स्नान मात्रे।

"उच्चारे मैथुने चैव प्रस्रावे दन्त-धावने ।
स्नाने भोजन-काले च षट्सु मौनं समाचरेत् ॥"[1]

दशहरा-स्नानम् ।

"अद्य हस्ते तु नक्षत्रे दशम्यां ज्यैष्ठिके सिते । दश-पाप-हरायाश्च दत्तं दानमकल्मषम् ॥ विरुद्धाचरणं हिंसा पर-दारोपसेवनम् । पारुष्यानृत-पैशुन्यम् असम्बद्धाभिभाषणम् ॥ पर-द्रव्याभिध्यानञ्च मनसाऽनिष्ट-चिन्तनम् । वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥"

एतद्दशाघ-घातन-कामो गङ्गायां स्नानमहं करिष्ये ॥ गार्ग्ये—

"ज्यैष्ठे मासि क्षिति-सुत-दिने शुक्ल-पक्षे दशम्यां
हस्ते शैलान्निरगमदियं[2] जाह्नवी मर्त्य-लोकम् ।
पापान्यस्यां हरति हि तिथौ सा दशेत्याहुरार्याः
पुण्यं दद्यादपि शत-गुणं वाजिमेधायुतस्य[3] ॥"[4]

अद्य हस्ता-नक्षत्र-युक्त-क्षिति-सुत-दिने शुक्ल-पक्षे दशम्याम् "अदत्तानामुपादानं हिंसा चैवाविधानतः[5] । पर-दारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥" पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः । असम्बद्ध-प्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ पर-द्रव्येष्वभिध्यानं[6] मनसाऽनिष्ट-चिन्तनम् । वितथाभिनिवेशश्च मानसं त्रिविधं

1 Op. cit, l. 14.

2. C. शैलान्निरगमदियं (?) ।

3. C. मेध्यायुतस्य ।

4. Op. cit, p. 215, l. 2. chap. दशहरा l. 2, "शङ्कः" ; v. r. हरति च

5. C. चैवाभिधानतः (?)

6 C. द्रव्येष्वतिध्यानम् ।

स्मृतम्[1] ।" एतद्दश-पाप-क्षय-पूर्वक-वाजि-मेधायुत-जन्य-पुण्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये ।

वार[2]-नक्षत्र-योगाभावेऽपि केचिद्दशमी-मात्रेऽपि दशहराख्यं मन्यन्ते, ब्रह्म-पुराण-वचन-दर्शनात् । तथा ब्राह्मे—"शुक्ल-पक्षस्य दशमी ज्यैष्ठे मासि द्विजोत्तमाः । हरते दश-पापानि तस्माद्दशहरा स्मृता ॥"[3] इति । एतस्यां [4]स्नान-मात्रेऽपि दश-पाप-क्षयः समः । नक्षत्र-मात्रे योगेऽपि, गरुड-पुराणे-दर्शनात् । अत्र वाजि-मेधायुत-जन्य-पुण्योल्लेखनं कर्तव्यमिति विशेषः ।

अथ संक्रान्ति-स्नानम् ।

अथ संक्रान्ति-निर्णयः । भविष्य-मात्स्ययोः "अयने द्वे विषुवे द्वे चतस्रः षडशीतयः । चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥ मृग-कर्कट-संक्रान्ती द्वे तूदग्दक्षिणायने । तुला-मेषे विषुवे द्वे गोल-मध्ये तथा पराः ॥" मृगो मकरः । "धनुर्मिथुन-कन्यासु मीने च षडशीतयः । वृष-वृश्चिक-कुम्भेषु सिंहे विष्णुपदी स्मृता ॥[5] संक्रान्तयो विष्णुपद्यो युगान्ताः परिकीर्तिताः ।" तथा च ब्रह्म-पुराणे—"सूर्यस्य सिंह-संक्रान्त्यामन्तं त्रेता-युगस्य च । तथैव वृष-संक्रान्त्यां द्वापरान्तश्च संस्थया ॥ तथा च कुम्भ-संक्रान्त्यामन्तं कलियुगस्य च ॥" सौरधर्मे—

"संक्रान्ति-समयः सूक्ष्मो दुर्लक्षः पिशितेक्षणैः । तद्योगा-

---

1 Op. cit, p. 215, l. 7 v. r. त्रिविधं कर्म मानसम् ।

2 वार omitted in A and C.

3 Op. cit., p. 212, l. 9, v. r. द्विजोत्तम ।

4 C. दर्शन-मात्रेऽपि ।

5 Op. cit., p. 487, l. 15, "भविष्य-मात्स्य-ज्योतिषेषु, v. r.... विषवती तुला-मेषे ...वृष-वृश्चिक-सिंहेषु कुम्भे ...।

दध्योर्ध्वे त्रिंशन्नाड्यः प्रकीर्तिताः ॥ अर्वाक् षोडश नाड्यस्तु परस्तादपि षोडश । पुण्य-कालोऽर्क-संक्रान्त्यां धर्मविद्भिरुदाहृतः ॥" 'नाड्यो' दण्डाः । "या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः ।[1] अह्नि[2] संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् । रात्रौ संक्रमणे पुण्यं दिनार्धं स्नान-दानयोः ।[3] अर्ध-रात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया । ऊर्ध्वं संक्रमणे यावदुदयात् प्रहर-द्वयम् ॥" 'अधः' प्रथमार्धं रात्रे'रूर्ध्वमु'त्तरार्धं रात्रेः । "पूर्णेऽर्ध-रात्रे संक्रान्तौ दिनार्धं पुण्यदे स्मृते ॥" पूर्व-दिनस्य परार्धं पर-दिनस्य पूर्वार्धमित्यर्थः । "षडशीति-मुखेऽतीते वृत्ते च विषुव-द्वये । भविष्यत्ययने पुण्यमतीते चोत्तरायणे[4] ॥" एवं च दक्षिणायनस्यात्र भावित्वेऽधिक-पुण्यता, विषुव-द्वयस्य उत्तरायणस्य चातीतत्वे पुण्यता । तथा च मात्स्ये—"अयने कोटि-गुणितं लक्षं विष्णुपदी-फलम् । षडशीति-सहस्रन्तु षडशीत्यामुदाहृतम् ॥ शतमिन्दु-क्षये पुण्यं सहस्रन्तु दिन-क्षये । विषुवे शत-साहस्रम् आ-का-मा-वैष्वनन्तकम्[5] ॥"

अद्यामुक-संक्रान्त्यां कोटि-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये । तथा, अद्य विष्णुपद्यां संक्रान्त्यां लक्ष-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये । तथा, अद्य षडशीत्यां संक्रान्त्यां षड-

1. Op. cit., p. 394, l. 8, या याः सन्निहिताः, etc.

2. C. अह्नि (?) ।

3. Op. cit. I, 94. बृहद्वसिष्ठ and others ; v. r.…संक्रमणे मानोर्दिनार्धे…

4. Op. cit., p. 388, ll. 7—8

5. Op. cit., p. 397, l. 8f., v. r. लक्षं विष्णुपदीषु च ।

प्रीति-सहस्र-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। जल-विषुव-स्नानेऽप्येतदेव फलम्। भविष्ये—"संक्रान्तिषु च सर्वासु चातुर्मास्य-फलं लभेत्। एतदेव भवेत् पुण्यं माघ-कार्त्तिक-मासयोः॥"

अद्यामुक-संक्रान्त्यां चातुर्मास्य-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-स्नानमहं करिष्ये॥

ब्राह्मे—"अयने द्वे विषुवे द्वे यः स्नायाद् जाह्नवी-जले।
गङ्गा-स्नानस्य लभते फलं षाण्मासिकस्य च॥"

अद्यामुकायन-संक्रान्त्यां षाण्मासिक-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये॥

अथ मास-स्नानम्

तत्रैक-मासस्य। भविष्ये—"नैरन्तर्येण गङ्गायां मासं यः स्नाति मानवः। स शक्र-लोके सुचिरं कालं स्थित्वा[1] सगोत्रजैः॥ ततो ब्रह्मपुरे तिष्ठेत् कल्प-कोटि-शतायुतम्[2]।"

अद्य शक्र-लोकाधिकरणक-बन्धु-गोत्र-सहित-सुचिर-कालावच्छिन्न-वासानन्तर-ब्रह्मपुराधिकरणक-कल्प-कोटि-शतावच्छिन्न-वास-कामः अद्यारभ्य मासमेकं गङ्गायां स्नानमहं करिष्ये। अत्र सौर-मास-परिग्रहः। तथा षण्मासस्य। भविष्ये—"षण्मासं स्नाति गङ्गायां नैरन्तर्येण यो नरः। सर्व-पाप-विनिर्मुक्तः समस्त-कुल-संयुतः॥ समस्त-भोग-संयुक्तो विष्णु-लोके महीयते॥ परार्द्ध-द्वितयं यावन्नात्र कार्या विचारणा॥ षण्मासमेकस्त्वपरः

1. A…सुचिरं कामो लब्ध्वा…।

2. Also quoted in PrayTat., गङ्गा-माहात्म्य-प्रकरण, p. 84, l. 4; v. r. स शक्र-लोकेषु चिरं…॥

सकृदेवोत्तरायणे। एतदेव भवेत् पुण्यं विषुवे च तथैव च[1] ॥"

अद्य सर्व-पाप-विनिर्मुक्ति-पूर्वक-समस्त-कुल-संयुत-समस्त-भोग-युतात्मीय-विष्णु-लोकाधिकरणक-परार्ध-द्वितयं यावन्महितल-वास: अद्यारभ्य नैरन्तर्येण पक्षमासं यावद् गङ्गायां स्नानमहं करिष्ये। उत्तरायण-विषुवाणामेकतरस्य स्नानेऽप्येतदेव फलम्।

माघ-फाल्गुन-स्नानम्।

गारुडे—"य इच्छेद्विपुलान् भोगांश्चन्द्र-सूर्य-ग्रहोपमान्। प्रात:स्नायी भवेन्नित्यं द्वौ मासौ माघ-फाल्गुनौ[2] ॥"

अद्य चन्द्र-सूर्य-ग्रहोपम-बहु-विपुल-भोग-प्राप्ति-कामो माघ-फाल्गुन-मास-द्वयं यावत् प्रत्यहं गङ्गायां प्रात: स्नानमहं करिष्ये। माघाधिकारे गारुडे—"मातरं पितरञ्चापि भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत द्वादशांशं लभेत्तु स:[3] ॥" 'द्वादशांशं' माघ-मासीय-स्नान-जन्य-फल-सम-फल-द्वादशांश-फलमित्यर्थ:। माघस्य। पाद्मे—"मकरस्थे रवौ माघे गोविन्दाच्युत माधव।

1. Op. cit., p 84, ll. 10—12; v. r., last verse a, पक्षमासमेकन्त्वपरं···।

2. BhavP., uttara, chap. 122, vv. 17b—18a, p. 484, v. r. यदीच्छेत्···चन्द्र-सूर्योपमान् ग्रहान्। पौष-फाल्गुनयोर्मध्ये प्रात:स्नायी भवेन्नर:; cp. TitTat., p. 401, ll. 9—10, v. r. 2nd line, कार्त्तिके सकले मासि प्रात:स्नायी भवेत् सदा।

3. PrayTat, op. cit., p. 76, ll 7—9, v. r.···पितरं जायां ...अष्ट-भागं लभेत स: ॥ cp. for अष्ट-भाग the verse प्रतिकृतिं कुशमयीं तीर्थ-वारिणि मज्जयेत्। मज्जयेत्तु यमुद्दिश्य अष्ट-भागं लभेत स:; op. cit, p 75, ll. 16—17.

स्नानेनानेन मे देव यथोक्त-फलदो भव[1] ॥ इमं मन्त्रं समुच्चार्य स्नायाम्मौनं समाश्रितः[2]। वासुदेवं हरिं विष्णुं माधवञ्च स्मरेत् पुनः ॥[3] तप्तेन वारिणा स्नानं यद् गृहे क्रियते नरैः। षडब्द-फलदं तद्धि मकरस्थे दिवाकरे ॥" अयमर्था इत्यर्थः। "बहिःस्नानन्तु वाप्यादौ द्वादशाब्द-फलं स्मृतम्। तडागे द्वि-गुणं राजन् नद्यां तच्च चतुर्गुणम्। दशधा देव-खाते च शतधा च महानदीम्। शतं चतुर्गुणं राजन् महानद्याश्च सङ्गमे ॥ सहस्र-गुणितं सर्वं तत् फलं मकरे रवौ। गङ्गायां स्नान-मात्रेण लभते मानुषो नृप ॥"

अद्य माघाधिकरणक-महानदी-सङ्गम-स्नान-जन्य-फल-सहस्र-गुण-फल-सम-फल-प्राप्ति-कामो माघे गङ्गायां प्रातः स्नानमहं करिष्ये। तथा—

"गङ्गां येऽत्रावगाहन्ते माघे मासि नराधिप।
चतुर्युग-सहस्राणि न पतन्ति सुरालयात् ॥"[4]

अद्य सुरालयाधिकरणक-चतुर्युग-सहस्रोपभोग-तदुत्तर-तत्-पुराधिकरणक-पाताभाव-कामो गङ्गायां माघे प्रातः स्नानमहं करिष्ये। अवगाहन-मात्रेऽप्येतदेव फलम्। तथा—

---

1. KṛtTat., p. 25, ll. 3—4; also MalM Tat., chap. माघ-स्नान, part 1, p. 79, ll. 4—5. 2. A. समन्वितः।

3. MalMTat., op. cit. part 1, p. 79, ll. 4-6, v. r. एतन्मन्त्र'···क्त्वा मौनश्च स्मरेत्ततः; KṛtTat., p. 25, ll. 4-5, 2nd line quoted, reading same as in MalM Tat.

4. TitTat., chap. कार्त्तिकादि-स्नान, p. 402, ll. 13-14, v. r. 2nd line, चतुर्युग-सहस्रान्ते; stated here to be quoted from the गारुड-पुराण।

"दिने दिने सहस्रन्तु सुवर्णानां विशांपते ।
तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ॥"[1]

अद्य प्रतिदिनं सहस्र-सुवर्ण-दान-जन्य-फल-सम-फल-प्राप्ति-कामो माघ-मासं यावत् प्रत्यहं गङ्गायां स्नानमहं करिष्ये । तथा—"अनडुाही-सहस्रन्तु कपिलायुतमेव च ।
तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ॥"

अद्यानडुाही-सहस्र-कपिला-गवायुत-दान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां प्रातः स्नानमहं करिष्ये । पाद्मे (?)—अद्य प्रतिदिन-षष्टि-सहस्र-वर्षावच्छिन्न-स्वर्गाधिकरणक-वास-कामो माघ-मासि प्रत्यहं प्रातर्गङ्गायां स्नानमहं करिष्ये । प्रकरण-बलात् प्रातः-कालीन-स्नान-परिप्राप्तिः । तथाहि स्कान्दे—"मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ । कथं पापैः प्रमुच्येत कथं स त्रिदिवं व्रजेत् ॥" तथा पाद्मे—"मकरस्थे रवौ माघे प्रातःकाले तथाऽमले । गोष्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि[3] ॥" एतेन सर्वत्र प्रातःपदं प्रयोज्यम् । तथा—"ब्रह्महा हेमहारी च सुरापो गुरु-तल्पगः । माघस्नायी विपापः स्यात् तत्-संसर्गी च पञ्चमः ॥ माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥"[4] इत्यादि-प्रकरणादित्यर्थः । माघ-

1. TitTat., op. cit., p. 204, ll. 14—16 ; stated to be quoted from the गारुड-पुराण ।

2. Op. cit., p. 402, ll. 1—2 ; stated to be taken from the पाद्म-पुराण ; followed by the verse "अकामो वा सकामो वा यत्र क्वापि बहिर्जले । इहामुत्र च दुःखानि माघ-स्नायी न पश्यति ।"

3. MalMTat., chap. माघस्नान, part 1, p. 76, ll. 5—6 ; v. r.…तथा मुने ।

4. Op. cit., p. 77, ll. 1—3 ; v. r. ब्रह्मघ्नमपि चाप्यन्नं...।

स्नाने सर्वेषामेवाधिकारिता। तथा—"सर्वेषां सर्व-वर्णानामाश्र-माणान्तु भूपते। माघ-स्नानन्तु धर्मस्य धाराभिः खलु वर्षति ॥"

अथ ग्रहण-स्नानम्।

नक्षत्र-निषिद्ध-काले गङ्गादि-तीर्थ-प्राप्तावपि ग्रहण-दर्शनं न कर्तव्यम्। निषेधे पुण्य-लाभासम्भवात्। तदुक्तं वराह-संहितायाम्—"जन्म-सप्ताष्ट-रिप्फाङ्क-दशमस्थे निशाकरे। दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च[1] ॥" 'अङ्को' नवमः। 'जन्मर्क्षं' जन्मतारा। 'निधनं' सप्तम-तारा। तथा राजमार्तण्डे भोजराजः—"सप्ताष्ट-जन्म-शेषेषु चतुर्थे दशमे तथा। नवमे च निशानाथे न कुर्याद्राहु-दर्शनम्[2] ॥" गारुडे—"चन्द्र-सूर्य-ग्रहे चैव योऽवगाहेत जाह्नवीम्। स स्नातः सर्व-तीर्थेषु किमर्थमटते महीम्[3] ॥"

अद्य रात्रौ चन्द्र-ग्रहे सूर्य-ग्रहे वा सर्व-तीर्थ-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। अवगाहनेऽप्येतदेव फलम्। ब्रह्म-पुराणे—"गवां कोटि-सहस्रस्य सम्यग् दत्तस्य यत् फलम्। तत् फलं जाह्नवी-स्नाने राहु-ग्रस्ते निशाकरे ॥ दिवाकरे फलं तच्छत-संख्यमुदाहृतम्[4] ॥"

अद्य रात्रौ राहु-ग्रस्ते निशाकरे गङ्गाधिकरणक-सम्यग्दत्त-गो-कोटि-सहस्र-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। अद्य राहु-ग्रस्ते दिवाकरे गङ्गाधिकरणक-राहु-ग्रस्त-निशाकर-कालीन-स्नान-जन्य-फल-शत-गुण-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। स्कान्दे—

1. TitTat., chap. ग्रहण, p. 410, ll. 10—11; v. r. रिपुफाङ्क—दशमस्थे…। "रिपुफं द्वादश-राशिः"—रघुनन्दनः।
2. Tit Tat., op. cit., p. 410, ll. 2—3, v. r. 2nd line, नवमे च तथा चन्द्रे …।
3. Not found in GarP. 4. Not found in BrahmaP.

"दिन-क्षये पर्वणि जात-काले शशाङ्क-सूर्य-ग्रहण-द्वये च ।
अनन्त-पुण्यं विषुव-द्वये च यस्य पुंसोऽक्षय-धर्मको यः (?) ॥"
'अक्षय' आभूत-संप्लव-स्थायी ।

अद्य रात्रौ अक्षय-बहु-धर्म-प्राप्ति-कामः शशाङ्क-ग्रहणे गङ्गायां स्नानमहं करिष्ये । अनन्त-फल-प्राप्ति-कामो वा । दिन-क्षय-पर्वजात-काल-सूर्य-ग्रहण-विषुव-द्वयानामेकतमस्य स्नानेऽप्येतदेव फलम् । गारुडे—"सूर्य-ग्रहः सूर्य-वारे सोमे सोम-ग्रहस्तथा । चूडामणिरयं योगस्तत्रानन्त-फलं लभेत् ॥ अन्यस्माद् ग्रहणात् कोटि-गुणमत्र फलं भवेत्[1] ॥"

अद्य सूर्य-वाराधिकरणक-सूर्य-ग्रहे चूडामणि-योगे वा गङ्गाधिकरणक-सूर्य-ग्रह-कालीन-स्नान-जन्य-फल-कोटि-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये । अनन्त-फल-प्राप्ति-कामो वा । तथा, अद्य रात्रौ सोम-वाराधिकरणक-सोम-ग्रहे चूडामणि-योगे वा गङ्गाधिकरणक-सोम-ग्रह-कालीन-स्नान-जन्य-फल-कोटि-गुण-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये । ब्राह्मे—

"इन्दोर्लक्ष-गुणं प्रोक्तं रवेर्दश-गुणन्तथा ।
गङ्गा-तीरे तु संप्राप्ते इन्दोः कोटी रवेर्दश[2] ॥"

अद्य राहु-ग्रस्ते दिवाकरे दश-कोटि-गुण-गङ्गा-स्नान-जन्य-

1. Not found in GarP. Tit Tat., op. cit., p. 416, ll. 9—11, v. r. 2nd line, तत्रानन्त-फलं स्मृतम्...last line,...फलं लभेत् ।

2. Not found in BrahmaP. op. cit., p. 415, ll. 3—4, v. r. रवेर्दश-गुणस्य तत् । Raghunandana says, इन्दोर्लक्ष-गुणमिति सामान्योदक-स्नान-विषयमेतत् ।

फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। अद्य रात्रौ राहु-ग्रस्ते निशाकरे कोटि-गुण-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये। दानम्। अद्य सोम-ग्रहे सोम-देवताधिकरणक-दातव्यं तद्वस्तु-दान-जन्य-फल-दश-गुण-फल-प्राप्ति-काम इदम् अमुक-वस्तु यथा-दैवतं गङ्गा-तीरे यथानाम-गोत्रायेत्यादि। दक्षिणा यथाविधि ग्रहणानन्तरम्। देव-सम्प्रदानक-दान-तपोनियमादि-सर्व-कर्म-करणेऽप्येतदेव फलम्। अत्र ग्रहण-काले तु अशौच-व्याप्तौ गाङ्ग-स्नान-मात्रं कर्तव्यम्। न तु दान-श्राद्धादि। यदुक्तं स्मृतौ—"सूतके मृतके चैव न दोषो राहु-दर्शने। स्नान-मात्रन्तु कुर्वीत दान-श्राद्ध-विवर्जितम्[1] ॥"

अथ मध्याह्न-स्नानम्।

भविष्ये—"प्रातः स्नानाद्दश-गुणं पुण्यं मध्यंदिने तथा[2] ॥"

अद्य प्रातःकालीन-गङ्गा-स्नान-जन्य-फल-दश-गुण-फल-प्राप्ति-कामो गङ्गायां मध्याह्ने स्नानमहं करिष्ये। तथा—"सायं-काले शत-गुणमनन्तं शिव-सन्निधौ॥" अद्य मध्याह्न-कालीन-गङ्गा-स्नान-जन्य-फल-शत-गुण-फल-प्राप्ति-कामो गङ्गायां सायं-काले स्नानमहं करिष्ये॥

---

1. Tit Tat., chap. पुरश्चरण, p. 421, ll. 9—10, v. r. 2nd line, स्नान-मात्रन्तु कर्तव्यं···। Raghunandana here refers to the गङ्गा-वाक्यावली and accepts विश्वासदेवी as the authority ; he also states that the same verse is found in the संवत्सर-प्रदीप।

2. Pray Tat., chap. गङ्गा-माहात्म्य, pp. 102-103.

अथ वारुण्यादि-स्नानम् ।

स्मृतिः—वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्य्य-ग्रह-शतैः समा[1] ॥

अद्य वारुण-नक्षत्र-समायुक्त-मधु-कृष्ण-त्रयोदश्यां वारुण्यां वा बहु-शत-सूर्य्य-ग्रह-कालीन-मध्याह्न-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये ।

महावारुणी महामहावारुणीति गौडीयाः पठन्ति ।

"शनि-वार-समायुक्ता सा महावारुणी स्मृता । यदि लभ्येत गङ्गायां कोटि-सूर्य्य-ग्रहैः समा[2] ॥" अद्य शनि-वाराधिकरणक-वारुण-नक्षत्र-समायुक्त-मधु-कृष्ण-त्रयोदश्यां महावारुण्यां वा गङ्गाधिकरणक-बहु-कोटि-सूर्य्य-ग्रहण-कालीन-गङ्गा-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये । तथा—

"शुभ-योग-समायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रि-कोटि-कुलमुद्धरेत्[3] ॥"

अद्य शुभ-योग-युक्त-शनि-वाराधिकरणक-शतभिषा-नक्षत्र-युक्त-मधु-कृष्ण-त्रयोदश्यां महामहावारुण्यां वा त्रि-कोटि-कुलोद्धरण-कामो गङ्गायां स्नानमहं करिष्ये ।

---

1. Pray Tat, p. 99, ll. 19—20; TitTat., p. 347, ll. 3—4; Kṛt Tat., p. 30, ll. 1—2; chap. वारुण्यादि-स्नान in all the works.

2. Tit Tat., p. 347, ll. 6—7, Pray Tat., p. 100, ll. 1—2; KṛtTat., p. 30, ll. 2—3; v. r. 2nd line, गङ्गायां यदि लभ्येत ।

3. TitTat., p. 347, ll. 7—8; PrayTat, p. 100, ll. 2—3; KṛtTat., p. 30, ll. 3—4,

### अथ महाज्यैष्ठी-स्नानम् ।

"ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा गुरु-वारेण महाज्यैष्ठी प्रकीर्तिता[1] ॥" 'ऐन्द्रं' ज्येष्ठा, 'प्राजापत्यं' रोहिणी । विना गुरु-वारेणापि । तथा—"ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा ज्यैष्ठ-मासस्य महाज्यैष्ठी प्रकीर्तिता[2] ॥" अनुराधासु चन्द्रेऽपि । यथाह व्याघ्रभूतिः—"ऐन्द्र-ऋक्षेऽथवा मैत्रे गुरु-चन्द्रौ यदा स्थितौ । पूर्णिमा ज्यैष्ठ-मासस्य महाज्यैष्ठी प्रकीर्तिता[3] ॥" [ यदा ] केवलं ज्येष्ठा-नक्षत्र-युक्ता ज्यैष्ठ-पूर्णिमा [ज्यैष्ठ] संवत्सरे स्यात् तदा महाज्यैष्ठी स्यात् । तथा च राजमार्तण्डे भोजराजः—"ज्यैष्ठे संवत्सरे चैव ज्यैष्ठ-मासस्य पूर्णिमा । ज्येष्ठा-भेन समायुक्ता महाज्यैष्ठी भवेत्तदा[4] ॥" तथा च स्कान्द-मात्स्ययोः—"पौर्णमासीषु ज्येष्ठासु[5] मासर्क्ष-सहितासु च । एतेषां स्नान-दानाभ्यां फलं दश-गुणं स्मृतम् ॥" एतत्तु, ज्यैष्ठे विशेष-विधानात् ज्यैष्ठेतरान्य-(?) मास-पूर्णिमासु बोद्धव्यम् । फल-दश-गुणत्वं सामान्य-पूर्णिमाधिकरणक-स्नान-दानाद्येत्यर्थः । स्मृतिः—"महा[6]-पूर्वासु चैतासु

1. TithiTat., p. 377, ll. 8—9 ; PrayTat, p. 100, ll. 5—6 ; chap. महा-ज्यैष्ठी ।

2. Tithi Tat., p. 377, ll. 10—13 ; PrayTat., p, 101, ll. 2—3.

3. Tithi Tat., p. 378, ll. 1—2 ; Pray Tat., p. 101, ll. 5—7 ; v. r. ऐन्द्रर्क्षे त्वथवा मैत्रे···।

4. Op. cit, ll. 3—4 ; op. cit., ll. 7—8.

5. C and A. पौर्णमासीषु ज्यैष्ठासु ।
   Tithi T., p. 377, l. 1. पौर्णमासीषु ज्यैष्ठासु...एतासु स्नान ।

6. B. महत्पूर्वासु ।

फलमक्षय्यमश्नुते[1] ॥" 'अक्षय्यम्' आभूत-संप्लव-स्थायि[2] । महत्-पूर्वत्वञ्चासां[3] यदा पौर्णमास्यामेव मास-चिह्नित-नक्षत्रं चन्द्र-बृहस्पति-योगस्तदा महा[4]वैशाख्यादि[5]-व्यपदेशः ।

तथा च[6] विष्णुः—"इन्द्रयेते सहितौ यस्यां दिवि चन्द्र-बृहस्पती । पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा[7]" ॥ तथा भोजराजः—"मास-संज्ञे यदा ऋक्षे चन्द्रः सम्पूर्ण-मण्डलः । गुरुणा याति संयोगं सा तिथिर्महती स्मृता[8] ॥" इति यद्यपि, तथापि[9] ज्यैष्ठे विशेष-विधानात् संवत्सर-सम्बन्धिज्यैष्ठ-पूर्णिमायां यदा वारेण विनापि ज्येष्ठा-नक्षत्र-मात्र-योग[10]-स्तदापि महाज्यैष्ठीत्वं "ज्यैष्ठ-संवत्सरे चैव" इति श्रवणात् । संवत्सरोऽत्र वर्ष-विशेषो न तु वर्ष-पर्यायः । कृत्स्ना ज्योतिःशास्त्रेण विशेष-लक्षणादुपेता वत्सरादयः । तथा च वराहः—"एते पञ्च समाख्याता वर्षाश्च ऋषिभिः पुरा । संवत्सरः, परिवत्सरोऽनुवत्सरः, इद्वत्सरः, उदावत्सरश्च ॥" लक्षणञ्चैतेषां गणित-शास्त्रे प्रसिद्धमेव । एतेन संवत्सर-सम्बन्धि-ज्यैष्ठ-पूर्णिमायां यदा ज्येष्ठा-नक्षत्रं स्यात् तदा महाज्यैष्ठीति विशेषः ।

---

1. C. फलमक्षयमश्नुते ।
2. C. अक्षयमाहुत-संप्लव—
3. A. पूर्वश्चासां ।
4. Not found in C.
5. C. वैशाख्यादि—
6. Not found in C.
7. Visnu Sam chap 49., V. 9, p. 78. Unv Samh ; Tithi T. p. 375, l. 3, महती ज्ञेया ।
8. Tithi T., p. 376, l. 3, मास-संज्ञे ।
9. C. तथा
10. C. नक्षत्र-योगः ।

भविष्ये—"महाज्यैष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
सोऽपि सद्गतिमाप्नोति[1] मोक्षं गङ्गाम्बु-मज्जनात् ॥"

अद्य महाज्यैष्ठ्यां मुक्ति-कामो गङ्गायां मज्जनमहं करिष्ये ।

भविष्ये—"महाज्यैष्ठी सुर-श्रेष्ठ कृताऽनन्त-फला स्मृता ।
तस्यान्तु जाह्नवी-स्नानं सूर्य-ग्रह-शताधिकम् ॥"

अद्य महाजैष्ठ्याम् अनन्त-फल-प्राप्ति-पूर्वक-गङ्गाधिकरणक-सूर्य-ग्रह-शत-कालीन-स्नान-जन्य-पुण्याधिक-पुण्य-प्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये ।

शिव-सन्निहित-गङ्गा-स्नानम् ।

भविष्ये—"अनन्तं शिव-सन्निधौ"

अद्य शिव-सन्निहित-गङ्गायामनन्त-फल-प्राप्ति-कामः स्नानमहं करिष्ये ।

पश्चिमवाहिनी-गङ्गा-स्नानम् ।

भविष्ये—"कुरुक्षेत्र-समा गङ्गा यत्र तत्रावगाहिता । कुरुक्षेत्राद्दश-गुणा यत्र विन्ध्येन सङ्गता[2] । ततो दश-गुणा प्रोक्ता यत्र पश्चिमवाहिनी ॥"

अद्य कुरुक्षेत्र-स्नान-जन्य-पुण्य-दश-गुण-पुण्य-प्राप्ति-कामो विन्ध्य-सङ्गत-गङ्गायां स्नानमहं करिष्ये । तथा, अद्य विन्ध्य-सङ्गत-गङ्गा-स्नान-जन्य-पुण्य-दश-गुण-पुण्य-प्राप्ति-कामः पश्चिम-वाहिन्यां गङ्गायां स्नानमहं करिष्ये । तथा—

"तस्मात् सहस्र-गुणिता यत्र चोत्तरवाहिनी" ।

अद्य पश्चिमवाहिनी-गङ्गा-स्नान-जन्य-पुण्य-सहस्र-गुण-पुण्य-प्राप्ति-काम उत्तरवाहिन्यां गङ्गायां स्नानमहं करिष्ये ।

1. Tithi T., p. 377, l. 6, विष्णु लोकमवाप्नोति ।
2. C. संस्थिता ।

अथ तर्पण-प्रकरणम् ।

तर्पणन्तु तीर्थे नित्यमेव तिलेन कर्तव्यम्, तीर्थे प्रतिषेधाभावात् । "तिल-तर्पणन्तु प्रतिषिद्ध-दिनं परित्यज्य कर्तव्य"मिति यत्, तत्तु सामान्य-जल-विषयम् । तथा च सामान्य-जल-विषये प्रतिषिद्ध-दिनमाह स्मृतिः—

"निषिद्ध-दिनमासाद्य यः कुर्यात्तिल-तर्पणम् । रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत् ॥ रवि-शुक्र-दिने चैव द्वादश्यां श्राद्ध-वासरे । सप्तम्यां जन्म-दिवसे न कुर्यात्तिल-तर्पणम्[1] ॥" तथा, "संक्रान्त्यां निशि सप्तम्यां रवि-शुक्र-दिने तथा । श्राद्धे जन्मदिने चैव न कुर्यात्तिल-तर्पणम्[2] ॥"

श्राद्ध-पदमत्र अमावस्या-श्राद्धेतर-दिन-विषयम् । तथा च मात्स्ये—"नील-षण्ड-विमोक्षेण अमावस्यां तिलोदकैः । वर्षासु दीप-दानेन पितृणामनृणो भवेत्[3] ॥" तथा च कात्यायनः—"न निर्वपति यः श्राद्धं प्रमीत-पितृको द्विजः । इन्दु-क्षये मासि मासि प्रायश्चित्ती भवेत्तु सः[4] ॥" इति वचनादमावस्या-श्राद्ध-करणस्य नित्यता[5] ।

स्मृतिः—"अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च । उपाकर्मण्युत्सर्गे युगादौ मृत-वासरे[6] ॥ सूर्य-शुक्रादि-वारेऽपि न कुर्यात्तिल-तर्पणम्[7] । अमावस्यान्तु ये मर्त्याः प्रयच्छन्ति तिलोदकम् ॥

---

1. AhnikaT., chap. तर्पण, p. 105, l. 6f,
2. Op. cit, "मत्स्य-पुराणम्" ।
3. Op. cit., l. 10f.
4. C. प्रायश्चित्तीयते तु सः ।
5. A. श्राद्धस्य करणता ।
6. A. पितृ-वत्सरे ।
7. Ahnika T., p. 106, l. 7—f. V. r. उपाकर्मणि चोत्सर्गे... न दोषस्तिल-तर्पणे ।

पात्रमौडुम्बरं गृह्य मधु-मिश्रं तपोधन। कृतं भवति तच्छ्राद्धं स-रहस्यं यथार्थवत्॥" इति। तीर्थे तु प्रतिषेधाभावमाह।

तथा च स्कान्दे—"तीर्थ-मात्रे तु कर्तव्यं तर्पणं स-तिलोदकैः। योऽन्यथा तर्पयेन्मूढः स विष्ठायां भवेत् कृमिः[1]॥ विशेषेण तु जाह्नव्यां सर्वदा तर्पयेत् पितॄन्। न काल-नियमस्तत्र सर्वथा सर्व-कर्मसु[2]॥"

तथा च कात्यायनः—

"यो नित्यं तर्पयेत्तीर्थे पितॄन् कृष्ण-तिलोदकैः।
बन्धात्तान् मोचयित्वा तु स्वयं विष्णु-पुरं[3] व्रजेत्[4]॥"

इति विधान-दर्शनात्तीर्थे तिल-तर्पणस्य नित्यतैव। गौडीया स्मृतिस्तु तिलैस्तर्पयेन्नित्यमिति यत्तत्र सामान्य-जल-विषये प्रतिषिद्ध-दिन-त्यागेन नित्यतेत्यर्थः, न तु सामान्येन तिल-तर्पणस्य नित्यता[5], बहु-पुराण-स्मृति-विरोधादिति संक्षेपः।

तत्र विधिः। स्कान्दे—

"श्राद्ध-कालेऽन्य-काले च पाणिनैकेन निर्वपेत्।
तर्पणे तूभयेनैव एष एव विधिः स्मृतः॥"

तथा यज्ञः—"नोदकेषु न[6] पात्रेषु न क्रुद्धो नैक-पाणिना।
नोपतिष्ठति तत्तोयं यत्र भूमौ प्रदीयते॥"

---

1. Ahnika T., p. 106 l. 11f., v. r.

2. This order is not followed by Raghunandana; AhnikaT., p. 106, l. 3, विशेषतस्तु जाह्नव्यां...क्रियते सर्व-कर्मसु।

3. A. बद्धान्मोचयित्वाऽथ स्वयं ब्रह्मपुरं।

4. Not found in कात्यायन-संहिता।

5. A. तर्पण-नित्यता। 6. A. नोदकेषु च—

स्नानाङ्ग-तर्पणमेव कृत्वा सूर्यार्घ्यादिकं सम्पाद्य आचम्य च पश्चात् सङ्कल्पं कृत्वा यथाविधि तर्पयेत्।

यदाह वायु-पुराणे—

"क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः[1] ॥"

बौधायनः—"कर्मयुक्तो नाभेरधःस्पर्शं वर्जयेत्।" छन्दोग-परिशिष्टे च—"पित्र्य-मन्त्रान्वाहरणे आत्मालम्भे अवेक्षणे। अधोवायु-समुत्सर्गे प्रहासेऽनृत-भाषणे ॥ मार्जार-मूषिक-स्पर्शे[2] आक्रुष्ट-क्रोध[3]-सम्भवे। निमित्तेषु च सर्वेषु कर्म कुर्वन्नपः स्पृशेत्[4] ॥"

'अन्वाहरणे' उच्चारणे। 'आत्मालम्भे' हृदय-स्पर्शे। 'अवेक्षणे' हृदयस्यैव। 'मार्जार-स्पर्शे' मार्जार-कृत एव। तथा छन्दोग-परिशिष्टे "सदोपवीतिना भाव्यं[5] सदा बद्ध-शिखेन च। वि-शिखो व्युपवीतिश्च यत् करोति न तत् कृतम्[6] ॥" विष्णु-पुराणे—"शुचि-वस्त्र-धरः स्नातो देवर्षि-पितृ-तर्पणम्। तेषामेव हि तीर्थेषु कुरुते[7] सुसमाहितः[8] ॥"

---

1. VayuP., Chap. 79, v 46b—47A. v. r.... मोहादनाचम्यैव···क्रिया भवन्ता···। AhnikaT., p. 29, l. 14; कर्म कुरुते मोहादनाचम्यैव नास्तिकः।

2. A. मूषि-संस्पर्शे। 3. A. अनुगक्ति-क्रोध—

4. KatSam. chap 2, vv. 13—14, p. 305; v. r. पित्र्य-मन्त्रानुद्रवणे···धर्मेक्षणे।...मार्जार-मूषक-स्पर्शे आकृष्टे...निमित्तेष्वेषु···।

5. A वाच्यं।

6. KatSam., chap 1. v. 4. p. 304. 7. C कुर्वीत।

8. Visnu P. तृतीयांश chap. 13, v. 26, p. 185. v. r.··· तेषामेव हि तीर्थेन कुर्वीत···।

उशना आह—"न वेष्टित-शिरा न कृष्ण-काषाय-वासाः पितृ-कार्याणि[1] कुर्यात्[2]।" तथा च स्कान्दे—"नीली-रक्तन्तु यद्वस्त्रं दूरतस्तद्विवर्जयेत्। स्नानं दानं तपो होमः स्वाध्यायः पितृ-तर्पणम्॥ वृथा तस्य महायज्ञा नीली-वासो बिभर्त्ति यः। नीली-रक्तं यदा वस्त्रं विप्रः स्वाङ्गेषु धारयेत्। तन्तु-सन्तति-संख्याति नरके स वसेद् ध्रुवम्॥"

एतेन शुक्ल-वस्त्र-धरः सर्व्व-कर्म्मसु भवेदित्यर्थः। स्मृतिः—"पट्टे नील्यौ[3] न दोषभागि"ति

हारीतः—"जपे होमे तथा दाने स्वाध्याये पितृ-तर्पणे। अशून्यन्तु करं कुर्यात् सुवर्ण-रजतैः कुशैः॥ चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञ-भूमिषु। स्तरणासन-पिण्डेषु षड् दर्भान्[4] परिवर्जयेत्॥ पिण्डार्थे ये स्तृता दर्भा यैः कृतं पितृ-तर्पणम् मूत्रोच्छिष्टे धृता ये च तेषां त्यागो विधीयते[5]॥"

तथा "दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः। अयात-यामान्येतानि नियोज्यानि पुनः पुनः॥[6]" मरीचिः—"मासे नभस्यमावस्या तस्यां दर्भ-चयो मतः। अयात-यामास्ते दर्भा विनियोज्याः पुनः पुनः॥" एवञ्च "विष्णो स्तुतं

---

1. C. तर्पणं।
2. Not found in उशनःसंहिता and उशनःस्मृतिः।
3. A. गर्भ-नीली। 4. C. षट् कुशान्।
5. Not found in LHarS. and VHarS; found in DakS.; chap 1 v. 11.; v. r. मूत्रोच्छिष्ट-प्रक्षिप्ते च त्यागस्तेषां विधीयते।···स्वाध्याये च रतः सदा। and S'raddhaT., p. 33, l. 9f।
6. Paur K. D., f. 4 (a), l. 4f.

कृत्या नोपार्जनीया" इति प्रसिद्धिरसमीचीनैव[1]। योगि-याज्ञवल्क्यः—"यद्युद्धृतं प्रसिञ्चेद्वै तिलान् संमिश्रयेज्जले। अतोऽन्यथा तु सव्ये न तिला ग्राह्या विचक्षणैः[2] ॥" अस्यायमर्थः। यद्युद्धृत-जलमादाय तर्पणं करोति तदा जल एव तिलाः प्रक्षेप्तव्याः, यदा तु जलाशयस्थ-जलमादाय, तदा वाम-हस्ते तिल-ग्रहणम्। अत्र गङ्गायान्तु उद्धृतोदक-तर्पणाशङ्का नाव-तरति[3], "गङ्गायां तर्पयेत् पितॄनि"ति दर्शनात्।

तथा कृष्णाजिनिराह[4]—आवाहन-मन्त्रम्। "नाभि-मात्रे जले स्थित्वा चिन्तयेदूर्ध्व-मानसः। आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्[5] ॥" इति। यमः—"त्रींस्त्रीनञ्जलाञ्ज-लीन् दद्यादुच्चैरुच्चतरं ततः। गो-शृङ्ग-मात्रमुद्धृत्य जल-मध्ये जलं क्षिपेत्[6] ॥" अस्यायमर्थः। पित्रादि-षट्काञ्जलि-त्रये

1. V. r. A. प्रसिद्धिः समीचीनैव।

2. Not traced in the YajnSam. But found in AhnT., chap. तर्पण, p. 105, under the name of योगि-याज्ञवल्क्य; v. r. प्रसिञ्चेद् वै···ततोऽन्यथा तु···। "अन्यथा वाम-हस्ते तु ततस्तर्पणमाचरेत्" इति मदन-पारिजाते लिखितम्।

3. C. नावतरतीति (?)।

4. V. r. कार्ष्णाजिनिः in AhnT., p. 108, l. 6.

5. YamaS., v. 92., p. 116; v. r....हृदयेनानुचिन्तयेत्··· पितरो गृह्णन्त्वेतानञ्जलीन्।

6. YamaS, v. 93, p. 116; v. r. हस्तौ कृत्वा सुसंयुक्तौ पूरयित्वा जलेन च। The first line is quite different. The 2nd. line is traced in YamaS., op. cit, and also quoted by Raghunandana in AhnT., p. 94, l. 14. Raghunandana explains गो-शृङ्ग-मात्र-पदं as प्रादेश-मात्र-परम्।

उत्तरोत्तर-वृद्धिः कर्तव्या। गो-शृङ्ग-मात्रमिति तृतीयान्तत्वे स्वनिर्देशः। योगि-याज्ञवल्क्यः—"दक्षिणे पितृ-तीर्थेन जलं सिञ्चेद् यथाविधि। दक्षिणेनैव गृह्णीयात् पितृ-तीर्थ-समीपतः[1] ॥" 'दक्षिणेन' करेण इति शेषः।

मरीचिः—"तिलानामप्यभावे तु सुवर्ण-रजतान्वितम्। तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः[2] ॥" अत्र पूर्व-पूर्वाभावे उत्तरोत्तर-विधिरिति भ्रमो वाक्यान्तर-विरोधात् त्यक्तव्यः। किन्तु तिलादीनां समुच्चितानामभावे एक-देशोपादान-प्रदर्शनमिति।

एवञ्च—"विना रूप्य-सुवर्णेन विना ताम्र-तिलैस्तथा। विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठते[3] ॥" इति शङ्ख-वचनं रूप्यादीनां सर्वेषामभावे न त्वेक-देशाभावेऽपि। "सौवर्णेन पात्रेण राजतोदुम्बरेण वा खड्ग-पात्रेण वा शङ्खेनाऽप्युदकं पितृ-तीर्थं स्पृशन् दद्यादि"ति[4] शङ्खोक्तम् सति सम्भवे। * * *

---

1. AhnT., chap. तर्पण, p. 107, l. 12, attributed to शातातप ; v. r. पितृणां पितृ-तीर्थेन···दक्षिणेनाथ···

2. Op. cit., p. 107, attributed to योगि-याज्ञवल्क्य। But it is not found in the याज्ञवल्क्य-संहिता। V. r. in आह्निक-तत्त्व,···मन्त्रेण चाप्यत्र।

3. S'amSam, chap 12. v. 1. p. 404. v. r···सुवर्णेन विना ताम्र-तिलेन च। and S'anS, chap. 13. v. 18. p. 394, v. r.···तिलेन च। Also quoted in AhnT., p. 101, l. 1; attributed to मरीचि ; ताम्रमयेन वा···विना मन्त्रैश्च दर्भैश्च।

4. S'anS, chap. 13., v. 9, p. 394 ; v. r.···राजतेनौदुम्बरेण खड्ग-पात्रेणान्य-पात्रेण···वोदकं...।

तर्पण-जलं क्षिपेदित्युक्तम्। स्थलस्थेन स्थल एव त्यक्तव्य-मित्याह शङ्खः—"नोदकेषु न पात्रेषु न क्रुद्धो नैक-पाणिना। नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते[1] ॥" बौधायन-मतेन स्थलस्थेनापि तर्पण-जलं जल एव प्रक्षेप्तव्यम्। यदा चोद्धृत-जलेन तर्पणं तदैव स्थले तर्पण-जल-प्रक्षेपः। तद्विषयमेव "प्राग-ग्रेषु सुरान्" इतीत्याह। तदयुक्तम्, "उदके नोदकं कुर्यात् पितृभ्यश्च कदाचन। उत्तीर्य च शुचौ देशे कुर्यादुदक-तर्पणम्[2] ॥" इति शङ्खेन जल-तर्पणं निवार्य शुचौ देशे तर्पणं विधाय "नोदकेष्वि"ति पुनरुदक-निषेधस्तीरस्थस्यापि जल-प्रक्षेपे कृत इति तन्मते स्थलस्थेन सर्वत्र स्थल एव प्रक्षेप्तव्यम्। बौधायन-मते स्थलस्थेन जले प्रक्षेप इति विकल्प एवेति। सुमन्तुः—"आकाशे तु क्षिपेद्वारि जलस्थो दक्षिणा-मुखः[3]।" आकाशे जलस्थोपर्यंव[4]।

ब्रह्माण्डाग्नेय-दान-धर्मेषु—"य इच्छेत् सफलं जन्म जीवितं श्रुतमेव च। स पितॄंस्तर्पयेद् गङ्गामभिगम्य सुरांस्तथा ॥"

श्रद्य जन्म-जीवित-श्रुत-साफल्य-प्राप्ति-कामो गङ्गा-जले पितॄनहं तर्पयिष्ये[5]। देव-तर्पणेऽप्येतदेव फलम्। वैष्णवे—"दत्ताः पितृभ्यो यायाऽऽपस्तनयैः श्रद्धयाऽन्विताः। समा-त्रयं प्रयच्छन्ति तृप्तिं मैत्रेय दुर्लभाम् ॥"

श्रद्य समा-त्रयावच्छिन्न-बहु-पितृ-तृप्ति-काम इमाः सतिल-

1. Not traced.

2. Not traced.

3. Found in YamaS. v. 93. p 116. v. r.…च…क्षिपेद्वारि वारिस्थो…

4. C. आकाशे जलोपर्यव।

5. C. पितृ-तर्पणमहं करिष्ये।

गङ्गायाः पितृभ्योऽहं ददे। अत्रापि प्रकरणात् सतिल-तर्पणमित्यर्थः।

भविष्ये—"सुलभाश्चतुरो वेदाः स-षडङ्ग-पद-क्रमाः। सुलभानि कुरुक्षेत्रे दानानि विविधानि च॥ चान्द्रायणानि कृच्छ्राणि विविधानि तपांसि च। अग्निष्टोमादयो यज्ञा विविधाश्चाऽऽप्त-दक्षिणाः। गाङ्ग-तोयेन सतिलेदुर्लभं पितृ-तर्पणम्[1] ॥" अद्य स-षडङ्ग-पद-क्रम-चतुर्वेदाध्ययन-जन्य-पुण्य-कुरु-क्षेत्राधिकरणक-बहु-विध-दान-जन्य-पुण्य-बहु-चान्द्रायण-बहु-कृच्छ्र-बहु-विध-तपोऽग्न्याप्त-दक्षिणाग्निष्टोमादि-यज्ञ-पुण्याधिक-पुण्य-प्राप्ति-कामः सतिल-गङ्गोदकैः पितॄनहं तर्पयिष्ये।

तथा—"मास-तर्पण-मात्रेण पिण्डानां पातनेन च। गङ्गायां पितरः सर्वे विमानान् सूर्य-वर्चसः॥ अप्सरोगण-संयुक्तान् हेम-रत्न-विभूषितान्। मुक्ता-जाल-परिच्छन्नान् वेणु-वीणानुनादितान्॥ भेरी-शङ्ख-मृदङ्गादि-निर्घोषान् स्रग्विभूषितान्। गन्धर्व-गेय-रुचिरान् दिव्य-भोग-समन्वितान्॥ गङ्गा-तर्पण-संतृप्ताः श्राद्ध-पिण्डेषु तर्पिताः। आरुह्य सहसा यान्ति ब्रह्म-लोकमनामयम्॥" अद्य सूर्य-वर्चोऽप्सरोगण-संयुक्त-हेम-रत्न-विभूषित-मुक्ता-जाल-परिच्छन्न-वेणु-वीणानुनादित-भेरी-शङ्ख-मृदङ्गादि-निर्घोष-स्रग्विभूषित-सगन्धर्व-गेय-रुचिर-सर्व-भोग-समन्वित-बहु-विमानाधिरोहण-पूर्वक-तर्पणीय-पितृ-गण-कर्तृक-ब्रह्म-लोक-गमन-कामोऽद्यादि मासं गङ्गा-जलेन पितृ-तर्पणमहं करिष्ये।

---

1. This last line गङ्गा-तोयेन, etc., is found in AhnT., chap. तर्पण, p. 107, l. 10; also found in the PrāyT., chap. गङ्गा-माहात्म्य, section नन्दा-स्नान, p. 89.

मासं पिण्डस्य पातस्यापि तदेव फलम्। इदं तु पिण्डं जलोपकण्ठे पितृ-यज्ञ-रीत्या कर्तव्यम्।

तथा, "नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः।"

अद्य नरकस्थ-पितृ-स्वर्ग-प्राप्ति-स्वर्गस्थ-पितृ-मोक्ष-प्राप्ति-कामः सतिल-गङ्गा-जलेन पितृ-तर्पणमहं करिष्ये।

"यावन्तश्च तिलाः पुत्रैः गृहीताः पितृ-कर्मणि।

तावद्वर्ष-सहस्राणि पितरः स्वर्गवासिनः॥"[1]

अद्यैतत्तर्पण-तिल-सम-संख्य-वर्ष-सहस्रावच्छिन्न-तर्पणीय-पितृ-स्वर्ग-वास-कामः सतिल-गङ्गा-जलेन पितृ-तर्पणमहं करिष्ये।

एतत्तु तर्पणं बहु-तिलेनैव कर्तव्यम्, तिल-संख्येय-वर्षा-वच्छिन्न-स्वर्ग-वास-फल-श्रवणात्। यथोक्तं स्मृतौ—

"तर्पणे पितृ-यज्ञादौ तिलो विन्ध्यगोपमो भवेत्। दशभिश्च तिलैस्तेन पितॄणां तृप्तिरुत्तमा[2]॥ अग्निष्टम्भ[3]-भयादेव न त्विच्छन्त्य[4]तिविस्तरम्। विशेषात् कुश-संसर्गात् पीयूषादधिकं स्मृतम्॥" एतत्त्वनिर्दिष्ट-विशेष-तिल-तर्पण-विषयम्। विशेषे तु बहवो ग्राह्या इत्यर्थः।

भविष्ये—"सुलभं सकलं पुण्यं यज्ञ-दानादिकं फलम्। गङ्गा-तोयैश्च सतिलैर्दुर्लभं पितृ-तर्पणम्॥" अद्य सकल-पुण्य-

1. Found in the commentary of Madhusudana on AhnT., pp. 106—107; "गङ्गामधिकृत्य भविष्ये"; v. r. तिला यस्मिन् गृहीताः...

2. Op. cit., p. 106, also quoted in the आचारादर्श; v. r. तिलो बिल्वोपमो भवेत्।

3. A. अग्नि-स्तम्भ।

4. A. नन्विच्छन्ति (?)

यज्ञ-दानादि-जन्य-फल-विशिष्ट-फल-प्राप्ति-कामो गङ्गायां सतिल-गङ्गा-तोयैः पितॄनहं तर्पयिष्ये ।

वैष्णवे "दत्ताः पितृभ्य" इत्यत्र केवल-जल-मात्रेण तर्पणम् । तीर्थ-मात्रे [1]तिलेन विना तर्पणे स एव दोषस्तत्र दोषावहो न भवति,[1] गङ्गायामेतद्विधानेन विशेष-वेद-श्रवणात्, केवल-जलेनापि कर्तव्यमत्र । अन्यत्र तु प्रतिषिद्ध-कालादावपि तर्पणे स एव दोषः, सामान्य-तर्पणे विशेषानिर्दिष्टे तिलेन तर्पणस्य नित्य-करणत्वार्थः । येषां मते प्रकरण-बलात्तिलेन तर्पणम्, तन्मते सर्वमनवद्यमित्यर्थः ।

अथ मृत्तिका-प्रकरणम् ।

ब्रह्माण्डाग्नेय-दान-धर्मेषु । "गङ्गा-तीर-समुद्भूतां मृदं मूर्ध्नि बिभर्ति यः । बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्[2] ॥" स्कान्दे—"अपि पापकरो नित्यं सुदूरस्थोऽपि मानवः । आलिप्य विबुधान् याति भक्त्या तत्तीर-मृत्तिकाम् ॥"

अद्य सर्व-पाप-क्षय-पूर्वक-विबुधत्व-प्राप्ति-कामो गङ्गा-तीर-मृत्तिकाभिः[3] स्व-देहमहमालेपयिष्ये । भविष्ये—"गङ्गा-तीर-समुद्भूतां मृदं भक्त्या तु मानवः । विलिप्य सर्व-देहन्तु गो-सहस्र-फलं लभेत् ॥" अद्य गो-सहस्र-दान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-तीर-समुद्भूत-मृदा स्व-देहमहमालेपयिष्ये ।

अथ जप-प्रकरणम् ।

तत्र विधिमाह याज्ञवल्क्यः—"प्रागग्रेषु कुशेष्वेव आसीन-

1.—1. C. तिलेन तर्पणेनैव दोषः ।

2. PrāyT., sec. गङ्गा-स्नान, p. 87, ll. 21-22; v. r. जाह्नवी-तीर-सम्भूतां...

3. A. गङ्गा-मृत्तिकाभिः ।

-चासने शुभे। नात्युच्छ्रिते नातिनीचे दर्भ-पाणिः सुसंयतः ॥ स्फाटिकेन्द्राक्ष-रुद्राक्ष-पुत्रजीव-समुद्भवैः। अक्ष-माला हि कर्तव्या उत्तरादुत्तरोत्तरैः[1] ॥ मणि-मुक्ता-प्रवालानां यथाशक्ति तथा-चरेत् ॥" विष्णुः[2]—"कम्बलादीनि कार्याणि यच्चान्यदुदितं भवेत्।" 'अन्यच्च' कृष्णसार-चर्मादीत्यर्थः।

नरसिंहे—"त्रि-विधो जप-यज्ञः स्यात्तस्य भेदं निबोधत। वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः ॥ त्रयाणां जप-यज्ञानां श्रेयान् स्यादुत्तरोत्तरः। यदुच्च-नीच-स्वरितैः स्पष्ट-शब्दवदक्षरैः। मन्त्रमुच्चारयेद्व्यक्तं जप-यज्ञः स वाचिकः। शनैरुच्चारयन् मन्त्रमीषदोष्ठौ विचालयन्। किञ्चिच्छब्दमयं ब्रूयादुपांशुः स जपः स्मृतः ॥ धिया यदक्षर-श्रेण्या वर्णाद्वर्णं पदात् पदम्। शब्दार्थ-चिन्तनाभ्यासः स उक्तो मानसो जपः[3] ॥"

शङ्खः—"जिह्वोष्ठौ न विचालयेत् न कम्पयेच्छिरोग्रीवम्। दन्तान् नैव प्रकाशयेत्[4] ॥" योगि-याज्ञवल्क्यः—"न च क्रमन् न च हसन् न पार्श्वमवलोकयन्। नोपाश्रितो न जल्पंश्च न प्रावृत-शिरास्तथा ॥ न पदा पदमाक्रम्य न चैव हि तथा करौ। न चासमाहित[5]-मना न च संश्रावयञ्जपेत्[6] ॥ न

1. C. उत्तराद्युत्तरोत्तरैः।
2. Not traced in the VisS.
3. The verse त्रिविधो···मानसो जपः are found in AhnT., chap. सवितुरुपस्थानम्, p. 138, ll. 9—16; v. r. त्रिविधो जप-यज्ञः···किञ्चिच्छब्दमयं विद्यात्...।
4. Not traced in शङ्ख-स्मृति।
5. V. r. A. न वासमाहित—
6. Not found in याज्ञवल्क्य-संहिता। AhnT., p. 139, ll.

क्लिन्न-वासाः स्थलगो जपादीनाचरेद् बुधः। वस्त्राहृते नार्द्र-वासा नैक-वासाः समाचरेत्॥ न जीर्णेन न मलिनेन पट-क्लिष्टो न वा जपेत्। यदि वा व्रत-लोपः स्याद् जपादिषु कथञ्चन। व्याहरेद् वैष्णवं मन्त्रं स्मरेद् वा विष्णुमव्ययम्[1]।" बौधायनः—"काषाय-वासाः कुरुते जप-होम-परिग्रहान्। न च देव-गमं तत् स्याद्धव्य-कव्यं यथो हविः[2]॥" व्यासः—"आर्द्र-वासाश्च यः कुर्याज्जप-होम-परिग्रहान्[3]। सर्वं तद्राक्षसं विद्याद्बहि-र्जानु च यत् कृतम्॥" वशिष्ठः—"जप-होमोपवासेषु धौत-वस्त्र-धरो भवेत्। अलङ्कृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः॥" स्कान्दे गारुडे च—"स्नानं दानं तपो होमः स्वाध्यायः पितृ-तर्पणम्। वृथा तस्य महायज्ञा नील-वासो बिभर्त्ति यः[4]॥"

एतदनुशासनात्तत्तन्मन्त्र-देवता ध्यायन् सुमना जपेदित्यर्थः। स्कान्दे "तन्नामजापी सततं सर्व-दुःखान्तमृच्छति। गङ्गेति नाम-जपने कपिला-दानजं फलम्॥" अद्य सर्व-दुःख-विनाशन-पूर्वक-कपिला-गो-दान-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गेति जपमहं करिष्ये। भविष्ये—अद्य सर्व-देवता-मन्त्र जप-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गेति जपमहं करिष्ये। मूल-वाक्यन्तु वीक्षण-प्रकरणे।

---

5-10, "योगि-याज्ञवल्क्य"; v. r. न च क्रमन् न विहसन्···न पदा पादमाक्रम्य न वै बहिः करौ स्मृतौ। नैवंविधं जपं कुर्यान्न च संश्रावयेज्जपम्॥

1. AhnT., p. 140, l. 1-2, v. r. यदि वाग्यम-लोपः स्यात्··· कदाचन।
2. Not traced in the बौधायन-संहिता।
3. V. r. A. प्रतिग्रहाम्।
4. PaurK Dar, p. 10 (b), "भविष्ये"।

भविष्ये ।—"सर्वानन्दप्रदायिन्यां गङ्गायां यो नरोत्तमः । अष्टाक्षरं जपेन्मन्त्रं तस्य मुक्तिः करे स्थिता[1] ॥" अस्य मुक्ति-प्राप्ति-कामो गङ्गा-गर्भे अष्टाक्षर-मन्त्र-जपमहं करिष्ये । 'गङ्गायां' लक्षणया गर्भे इत्यर्थः । अष्टाक्षर-मन्त्रस्तु "ॐ नमो नारायणाये"ति । "गङ्गायां विधिवत् स्नात्वा जपेदष्टाक्षरं यदि । सर्व-यज्ञ-फलं तस्य सर्व-दान-फलं तथा ॥ सर्व-व्रत-फलञ्चैव भवेत् सर्व-तपःफलम् । षण्मासादणिमाद्यास्तु सिद्धयोऽष्टौ भवन्ति वै ॥" अद्य सर्व-यज्ञ-सर्व-दान-सर्व-व्रत-सर्व-तपःफल-सम-फल-प्राप्ति-कामो गङ्गायां कृत-वैध-स्नानो गङ्गा-तीरे अष्टाक्षर-मन्त्र-जपमहं करिष्ये ।

ब्रह्माण्डे—"स्नानं दानं तपो जप्यं श्राद्धं देव-प्रपूजनम् । गङ्गायान्तु कृतं सर्वं[2] कोटि-कोटि गुणं भवेत् ॥" अद्यैतत्क्षमस्य-मन्त्र-जप-पुण्य-कोटि- * * * * * पः । "द्रव्यं त्वन्याय-लब्धं न यः करोत्यौर्ध्व-दैहिकम् । न तत्फल-मवाप्नोति तस्यार्थस्य दुरागमात् ॥" 'न्यायः' शास्त्र-विहितार्थार्जनोपायः । 'और्ध्व-दैहिकं' पार-लौकिकमिति ।

अत्र मनुः ।—"शक्तः पर-जने दाता स्व-जने दुःखजीविनि ।

---

1. PrayT., chap. गङ्गा-माहात्म्य, p. 97, ll. 7-9 ; सदानन्द-प्रदायिन्यां गङ्गायाञ्च नरोत्तम ।···मुक्तिस्तस्य करे स्थिता ॥

2. V. r. C. जप्यम् । PadmaP., chap. 62, v. 37, p. 737 ; v. r यज्ञो दानं···श्राद्धञ्च सुर-पूजनम् ।···कृतं नित्यं···; cp. PrayT. chap. नन्दा-स्नान, "स्कन्द-पुराण" ; v. r. यज्ञो दानं...श्राद्धञ्च सुर-पूजनम् ; also S'uddhiT., chap. दान-प्रकरण ।

मध्वापादो विषास्वादः स धर्मः प्रतिरूपकः[1] ॥" 'स्वजने'ऽवश्य-भरणीये। इत्यादिभिरुक्त-धर्म-प्रतिरूपको न धर्मः।

वृहस्पतिः—"कुटुम्ब-भक्त-वसनाद् यं यदतिरिच्यते। मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत्[2] ॥" कुटुम्ब-भक्त-वसनाद् यदतिरिच्यते तद्देयं, स धर्मः। 'अन्यथा' कुटुम्ब-भक्त-वसनानतिरिक्तत्व-स्थाने तु 'दातुर्धर्मो' वदान्यत्व-कीर्तनादिना मधुरः, पश्चाद् 'विषं' नरक-हेतुत्वेन परिणाम-विरसो भवेदित्यर्थः।

"भृत्यानामुपरोधेन यः करोत्यौर्ध्व-देहिकम्। तद् भवत्य-सुखोदर्कं जीवतोऽस्य मृतस्य च॥ 'भृत्या' अवश्य-भरणीयाः। 'उपरोधो'ऽवरोधः। 'और्ध्व-देहिकं' पार-लौकिकम्। 'असुखोदर्कं' दुःख-फलम्। 'भवत्यस्य' कर्तुः। कात्यायनः—"सर्वस्वं गृह-वर्जन्तु कुटुम्ब-भरणादिकम्। यद्द्रव्यं तत् स्वकं देयं यः स्यादतोऽन्यथा भवेत्॥" याज्ञवल्क्यः—"स्वं[3] कुटुम्बाविरोधेन देयं दार-सुतादृते। नान्वये सति सर्व-स्वं यच्चान्यस्मै प्रतिश्रुतम्[4] ॥" 'कुटुम्बाविरोधेन' अवश्य-भरणीय-भरणानुपघातेन। दाराः सुताश्च न देयाः। 'अन्वये' सन्ताने 'सति सर्वस्वं'[5] न देयम्।

दक्षः—"सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्। अन्वाहितञ्च निक्षेपः सर्वस्वं चान्वये सति॥ आपत्स्वपि न देयानि

---

1. Manu, chap. 11, v. 9. p. 922. v. r. मध्वापातो।

2. S'uddhiT., chap. स्नान-प्रकरण, p. 37,ll. 3-15.

3. A. स्व।

4. YājS. v. 177. p. 180 ; unav Saṃh., chap. 12, v. 175, p. 244.

5. A. सर्वं स्वं।

नव वस्तूनि पण्डितैः। यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः[1] ॥" 'सामान्यं' नाना-स्वामिकं, तत्तदनुमतिं विना। 'याचितं' परस्वं स्व-व्यवहारार्थमानीतं वस्त्रालङ्कारादि। 'न्यासो' बृहस्पतिनोक्तः—"राज-चौरादिक-भयाद्दायादानाञ्च वञ्चनात्। स्थाप्यतेऽन्य-गृहे द्रव्यं न्यासः स परिकीर्तितः ॥" 'आधिं' गृह-स्वाम्यसमक्षमित्यर्थः। 'दारा' आत्म-स्त्रियः। 'तद्धनं' दार-धनम्। 'अन्वाहितं' कात्यायनेनोक्तम् "अर्थं-मार्गेण कार्येऽस्मिंश्च चलेन्न चलेन्मनः। दद्यात्स्वमिति यो दत्तः स चान्वाहितमुच्यते[2] ॥" इति। 'निक्षेपो' नारदेनोक्तः—"स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः। निक्षेपो नाम तत् प्रोक्तं व्यवहार-पदं बुधैः ॥" इति। गृह-स्वामि-समक्षमिति शेषः।

कात्यायनः—"विक्रयश्चैव दानञ्च न नेयाः स्युरनिच्छवः। दाराः पुत्राश्च सर्वं-स्वमात्मन्येव तु योजयेत्[3] ॥" 'योजयेत्' सम्बध्नीयात्, न दद्यादित्यर्थः। "आपत्-काले तु कर्तव्यं दानं विक्रय एव च। अन्यथा न प्रवर्तेत इति शास्त्रे विनिश्चयः[4] ॥" 'आपदि' दान-विक्रय-व्यतिरेकेणापनेतुमशक्यायां दार-पुत्रयोरिच्छया दान-विक्रययोर्न दोषः।

---

1. DakṣaSam, chap. 3. Vv. 17.—18, p. 427; v. r., सामान्य याचितं...क्रमायातश्च निक्षेपः...
2. Not found in KatSam.
3. Not found in the KatSaṃ. But the S'uddhiT. too attributes the verse to कात्यायन; chap. दान-प्रकरण, p. 373, ll. 6-7. नेयाः प्रापणीया इति राधामोहन-गोस्वामी।
4. S'uddhiT., op. cit., pp. 373—374; v. r. शास्त्रार्थ-निश्चयः।

वशिष्ठः—"शुक्र-शोणित-सम्भवः पुरुषो मातापितृ-निमित्तकः। अस्य प्रदान-विक्रय-परित्यागेषु मातापितरौ प्रभवतः, नत्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा। स हि सन्तानाय पूर्वेषाम्। न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, अन्यत्रानुज्ञानाद्भर्तुः। न त्वेकं पुत्रं दद्यादिच्छन्नपि[1]।" "परिभुक्तमवज्ञातमपर्याप्तमसंस्कृतम्। यत् प्रयच्छति विप्रेभ्यस्तद् भस्मन्येव तिष्ठति॥"

'विप्र' इत्युपलक्षणं सर्वाधिकरण-दान-मात्रे।

'परिभुक्तं' गृहीतोपयोगं वस्त्रादि। 'अवज्ञातम्' अनादृतम्। 'अपर्याप्तं' कार्याक्षममतिजीर्णं तुरङ्गमादि। 'असंस्कृतं' संस्कार-राहित्यात् कार्यानुपयोगम् आसनादि। रामायणे—"नावज्ञाय प्रदातव्यं किञ्चिद् वा केनचित् क्वचित्। अवज्ञाय[2] तु यद्दत्तं दातुस्तद्दोषमावहेत्॥" शातातपः—"वेद-विक्रय-निर्दिष्टं स्त्रीषु यच्चार्जितं धनम्। अदेयं पितृ-देवेभ्यो यच्च क्लीवादुपार्जितम्[3]॥" 'वेद-विक्रय-निर्दिष्टं' वेद-विक्रयणेन लभ्यमिति निर्देश-विषयम्। 'स्त्रीषु यच्चार्जितम्' इति स्त्रीणां व्यवहारोपजीवनेन।

दाने विष्णुः—"यथोक्तमपि यद्दानं चित्तेन कलुषेण तु। तत्तत्-सङ्कल्प-दोषेण दानं त्वन्य-फलं स्मृतम्॥" 'तत्तत्-सङ्कल्प-दोषेण' देय-द्रव्यादि-विषय-तृष्णादि-दोषेण, 'तद्दानं त्वन्य-फलं' पात्राद्युत्कर्षाधीन-फलातिशय-शून्य-दान-मात्र-फलवत्।

तथा—"येन येन हि भावेन यद् यद् दानं प्रयच्छति। तेन तेन हि भावेन प्राप्नोति परिपूजितः॥" 'येन येन हि भावेन'

1. Vas'Sam, chap 15, v. 1, p. 499. v. r. शोणित-शुक्र-सम्भवः...विक्रय-परित्यागेषु ···। SuddhiT., p. 373, ll. 3-5.

2. A अवज्ञायान्तु।

3. Not found in S'atSam.

सात्त्विक-राजस-तामसान्यतमेनेति, सात्त्विकाद्यन्यतम-देव-मानुष-पशु-भावेनेत्यर्थः। गौतमः।—"प्रच्छन्नानि च दानानि ज्ञानञ्च निरहङ्कृतम्। तपांसि च सुगुप्तानि तेषां फलमनन्तकम्॥" महाभारते।—"एकां गां दश-गुर्दद्याद्दश दद्याच्च गो-शती। शतं सहस्र-गुर्दद्यात् सर्वे तुल्य-फलं हि तत्[1]॥" गो-पदमत्रोपलक्षण-परम्। सर्वत्रैवानेनानुमानेन उन्नेयमिति। अल्प-वित्तस्याल्प-दानम्। प्रशंसा-परमेतत्। देय-द्रव्यस्य संख्या-भेदेन फल-भेदात्। यथा मात्स्ये—"यद्यात्म-विक्रयं कृत्वा गाः क्रीत्वा संप्रयच्छति। यावतीः स्पर्शयेद् गास्तु स तावत् फलमश्नुते॥" 'तावत् फलं' तावद्गो-लोम-सम्मितं स्वर्ग-रूपं फलम्। हारीतः—दानविधाने, "तस्मादद्भिरवोक्ष्यैतद् दद्यादालभ्य एव वा।" 'अवोक्ष्य' प्रोक्षणं कृत्वा। 'आलभ्य' मोदकेन पाणिना स्पृष्ट्वा। विष्णुधर्मोत्तरे—

"द्रव्यस्य नाम गृह्णीयाद् ददानीति तथा वदेत्।
तोयं दद्यात्ततो दाता दाने विधिरयं स्मृतः॥"

गौतमः—"अन्तर्जानु करं कृत्वा स-कुशन्तु तिलोदकम्। फलांशमभिसन्धाय प्रदद्याच्छ्रद्धयाऽन्वितः[2]॥" स्मृतिः—"नाम-गोत्रे समुच्चार्य प्राङ्मुखो देय-कीर्तनात्। उदङ्मुखाय विप्राय दद्याऽन्ते स्वस्ति वाचयेत्[3]॥" व्यासादि-मते—"नाम-गोत्रे

---

1. Agni P., Chap. 211, v. I; v. r. सर्वे तुल्य-फला हि ते। S'uddhi T., Chap. दान, p. 370; v. r. सहस्रं बहु-गो-धनः।

2. Dan C., chap. दान-कृत्य, p. 3 (a), ll. 3.6; v. r. सकुशं सतिलोदकम्...फलान्यपि यः सन्धाय; Suddhi T., p. 382.

3. Suddhi T., p. 388; v. r....प्राङ्मुखो देव-कीर्तनात्। "देव-कीर्तनादिति क्वचित्पाठः पठन्ति। देव-कीर्तनं कृत्वेत्यर्थः; ततश्च

समुचार्यं प्रदद्याच्छ्रद्धयाऽन्वित:। परितुष्टेन भावेन तुभ्यं सम्प्रददे इति ॥"

अथ द्रव्य-दैवतमाह विष्णुधर्मोत्तरे—"अभयं सर्व-दैवत्यं भूमिर्वै सर्व-दैवता[1]। कन्या दासस्तथा दासी प्राजापत्या: प्रकीर्त्तिता:। प्राजापत्यो गज: प्रोक्तस्तुरगो यम-दैवत:। तथा चैक-शफं सर्वं कथितं यम-दैवतम् ॥ महिषश्च तथा याम्य उष्ट्री वै नैर्ऋतो भवेत्। रौद्री धेनुर्विनिर्दिष्टा छाग आग्नेय उच्यते[2] ॥ मेषन्तु वारुणं विद्याद् वराहो वैष्णव: स्मृत:[3]। आरण्या: पशव: सर्वे कथिता वायु-दैवता: ॥ जलाशयानि सर्वाणि वारिधानीं कमण्डलुम्। कुम्भश्च करकश्चैव वारुणानि विनिर्दिशेत् ॥ समुद्रजानि रत्नानि सामुद्राणि तथैव च[4]। आग्नेयं कनकञ्चैव[5] सर्व-लौहानि चाप्यथ ॥ प्राजापत्यानि शस्यानि पक्वान्नमपि च द्विजा:[6]। ज्ञेयानि सर्व-गन्धानि गान्धर्वाणि विचक्षणै:[7] ॥ वार्हस्पत्यं स्मृतं वास: सौम्यान्यथ रथानि च। पक्षिणश्च तथा सर्वे वायव्या: परिकीर्त्तिता:[8] ॥ विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च।

---

दाता अमुकदैवतं विष्णु-दैवतं वा वक्तव्यम्। दैय-कीर्त्तनादिति षट्त्रिंशन्मते पाठ:। व्याख्यातञ्च हेमाद्रिणा दैय-कीर्त्तनोत्तरं दत्त्वेत्यर्थ:।"

1. Dān C., p. 4 (a), v. r.···भूमिर्वै विष्णु-देवता।
2. Op. cit., v. r. छागमाग्नेयमादिशेत् ॥
3. Op. cit., v. r. वाराहं वैष्णवन्तथा।
4. Op. cit., v. r. वारुणानि द्विजोत्तम।
5. Op. cit., v. r. नर्क्क प्रोक्तं।
6. Op. cit., v. r. द्विज।
7. Op. cit., v. r. संज्ञेया: सर्व-गन्धाश्च गान्धर्वा वै विचक्षणै:।
8. Op. cit., the whole verse has been omitted.

सारस्वतानि ज्ञेयानि पुस्तकाद्यानि[1] पण्डितैः ॥ सर्वेषां शिल्प-भाण्डानां विश्वकर्मा तु दैवतम् । द्रुमाणामथ पुष्पाणां शाकानां हरितैः सह । फलानामपि[2] सर्वेषां तथा ज्ञेयो वनस्पतिः ॥ मद्य-मांसे विनिर्दिष्टे प्राजापत्ये तथैव च । छत्रं कृष्णाजिनं शय्यां रथमासनमेव च । उपानहौ तथा यानं यच्चान्यत् प्राण-वर्जितम् । उत्तानाङ्गिरसं तद्वत् प्रतिगृह्णीत मानवः ॥[3] पर्जन्यस्य तथा नीरं शस्त्र-वर्म-ध्वजादिकम् । व्रतोपकरणं सर्वं कथितं सर्व-दैवतम्[4] ॥ गृहन्तु सर्व-दैवत्यं यदनुक्तं द्विजोत्तमाः । तज्ज्ञेयं विष्णु-दैवत्यं सर्वं वा विष्णु-दैवतम्[5] ॥"

तदेतद्दैवतानां यथायथममुक-दैवतमिति द्रव्य-विशेषणत्वेन दान-वाक्येऽभिधानमाचरेत् । तत्रान्नदानं नन्दिकेश्वर-पुराणे—"देवतानाञ्च यो दद्यादन्नं श्रद्धा-समन्वितः । शिक्थाच्छिक्थाद् वसेत्तत्र समानाममरैः सह ॥"

'समानां' वर्षाणाम् । 'शिक्थात् [शिक्थात् ?]' प्रत्यन्नमिति यावत् । तथा "शिक्थमन्नं तथौदनमि"ति सागरः ।

"एतद्दश-गुणं पुण्यम् अन्ने व्यञ्जन-संयुते । यत्रेष्टं देवता-दत्ता-

---

1. Op. cit., v. r. पुस्तकादीनि ।

2. Op. cit., v. r., शाकैर्हरितकैस्तथा फलानामथ ।

3. Op. cit., पात्रं···सर्वञ्चाङ्गिरसत्वेन··· ।

4. Op. cit., गृहोपयोगि यत् सर्वं शस्त्र-व्रतोपकरणं···विज्ञेयं सर्व-दैवतम् । Suddhi T., v. r. पर्जन्यस्य तथोशीरं··· ।

5. Op. cit., v. r. गृह-दैवत्यं···विज्ञेयं···सर्वदा द्विज-सत्तमाः ॥ All the above verses beginning from छत्रं सर्व-दैवत्यं are found in शुद्धि-तत्त्व, pp. 388-390.

दैतत् पुण्यं प्रकीर्तितम् ॥ यो दद्याद् ब्राह्मणेऽन्नानि तस्य द्वि-गुणितं फलम् । तस्माद् विष्णौ तु दत्त्वाऽन्नं द्वि-गुणं फल-मश्नुते ॥ रुद्रायान्न-प्रदानेन फलमेतच्चतुर्गुणम् । यथा-काल-समा-योगादयज्ञानानाञ्च योगतः ॥ शत-संख्यं भवेत् पुण्यं सम्यगन्न-प्रदायिनः । एतत् सर्वं भवेत् पुण्यम् अन्न-मात्रेण दानतः । गङ्गायां नात्र सन्देहो दातव्यं हितमिच्छता ॥"

अद्य प्रतिसिक्थं तत्त-समावच्छिन्नामर-सहित-स्वर्गाधि-कारणक-वास-काम इदमन्नं प्रजापति-दैवतं भगवत्यै गङ्गायै तुभ्यमहं ददे । दक्षिणा च । अद्य गङ्गा-संप्रदानकान्न-दान-जन्य-पुण्य-दश-गुण-पुण्य-प्राप्ति-काम इदं सव्यञ्जनान्नं प्रजापति-दैवतं भगवत्यै गङ्गायै तुभ्यमहं ददे । एतत् सर्वं सिद्धान्नमेव ।

अथ दीप-दानम् । तत्र विधिः, कालिका-पुराणे—"घृतस्य दीपः प्रथमस्तिलोद्भवस्ततः परम् । सार्षपः फल-निर्यास-जातो वा राजिकोद्भवः । दधिजश्चान्नजश्चैव दीपाः सप्त प्रकीर्तिताः[1] ॥"

महाभारते—"हविषा प्रथमः कल्पो द्वितीयश्चौषधी-रसैः । वसा-मेदोऽस्थि-निर्यासैर्न कार्यो भूतिमिच्छता ॥"

कालिका-पुराणे—"नेत्राह्लादकरः स्वर्चिर्दूर-ताप-विवर्जितः । सुशिखः शब्द-रहितो निर्भ्रंशो नातिह्रस्वकः[2] ॥ दक्षिणे दीप-वृक्षस्थं प्रदीपं तं विसृजये । दुर्वृत्त-वर्त्ति-युक्ते हं पात्रेऽभग्ने सुदर्शने ॥ प्रदीप-वृक्ष-कोटौ तु दीपं दद्यात् प्रयत्नतः । लभते यस्य तापस्तु दीपस्य चतुरङ्गुलात् ॥ न स दीप इति ख्यात ओघ-

1. Kal P. chap. 69, v. 108, p. 451. v. r. घृत-प्रदीपः प्रथमस्तिल-तैलोद्भवस्ततः ।

2. Kal P., Chap. 69, v. 117, p. 451 ; v. r. रहितो निर्व्रणो' ।

त्वविस्तु(?) स स्मृतः । वृत्ते प्रदीपो दातव्यो न तु भूमौ कदाचन ॥ सर्वंसहा वसुमती सहते न त्विदं द्वयम्[1] । पकार्य[2]-पाद-घातञ्च दीप-तापं तथैव च ॥ न मिश्रीकृत्य दद्यात्तु दीप-स्नेहान् घृतादिकान् । कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ॥ पद्म-सूत्र-भवा वापि दर्भ-सूत्र-भवा तथा । शणजा बादरा वापि फल-कोषोद्भवाऽपि वा । वर्त्तिका दीप-कृत्येषु सदा पञ्च-विधाः स्मृताः[3] ॥" 'बादरा' कार्पास-सूत्रोद्भवा । 'फल-कोषोद्भवा' कौषेय-सूत्र-भवा ।

"शाणं बादरकं जीर्णं वस्त्रं मलिनमेव वा । उपभुक्तन्तु नादद्याद् वर्त्तिकार्थं कदाचन[4] ॥ नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम्[5] । दीप-हर्त्ता भवेदन्धः काणो निर्वापको भवेत्[6] ॥ प्रदीप-दानं यो दद्याद् दैवते ब्राह्मणेषु च । तेन दीप-प्रदानेन अक्षयां गतिमाप्नुयात् ॥" अद्याक्षय-गति-प्राप्ति-काम इममसुक-दीपं भगवत्यै गङ्गायै तुभ्यमहं ददे ।

---

1. Kal P., chap. 69, v. 112, p. 451, v. r. द्वयम् ।

2. C. सृजार्व (?) ।

3. Kal P, Chap. 69, v. 109. p. 451 ; v. r···भवा दर्भ-गर्भ-सूत्र-भवाऽथवा ।...बादरी वापि···षोद्भवा तथा ।

4. Kal P, Chap. 69, v. 120. p. 451 ; v. r···वा दारवं वस्त्रं जीर्णं··· । उपयुक्तञ्च···वर्त्तिकार्थन्तु साधकः ।

5. KalP., chap. 69, v. 126 (a), ···दीपं कदाचिदपि यत्नतः ।

6. KalP., chap. 69, v. 127, (b). This line, according to Hemādri, occurs in the विष्णु-धर्मोत्तर, see Catur VC., दान-खण्ड, p. 945, l. 15.

तथा—"गिरि-शृङ्गे प्रदातव्या नदीनां पुलिनेषु च[1]। वृक्ष-मूलेषु गोष्ठेषु कान्तार-गहनेषु च। दीप-दानेन सर्वत्र महत् फल-मवाप्नुते॥ यावन्त्यक्षि-निमेषाणि दीपः प्रज्वलते नृप। तावन्त्येव स राजेन्द्र वर्षाणि दिवि मोदते॥ दीप-दानेन राजेन्द्र चक्षुष्मानिह जायते। रूप-सौभाग्य-युक्तश्च धन-धान्य-समन्वितः॥"[2]

पूजादि विधाय अद्य समहत्-फल-प्राप्ति-यावदक्षि-निमेषावच्छिन्न स्वर्गाधिकरणक मोदनैहिक-चक्षुष्मत्त्व-रूप-सौभाग्य-युक्तत्व-धन-धान्य-समन्वितत्व-काम एतान् दीपान् विष्णु-दैवतान् नदी-पुलिनेष्वहं दास्ये। दक्षिणा च। एवं वृक्ष-मूलादिष्वपि वाक्यमूह्यम्। प्रदीप-दान-व्यवस्था तु सर्वत्र प्रदीप-दाने बोद्धव्या।

अथ धूप-दानम्। तत्र विधिः—"नासाक्षि-रन्ध्र-सुखदः सुगन्धोऽतिमनोहरः। दह्यमानस्य काष्ठस्य प्रयतस्येतरस्य वा[3]॥ परागस्याथ वा धूपो[4] निस्तापो यत्र[5] जायते। स धूप इति विज्ञेयो देवानां तुष्टि-कारकः[6]॥ राज्ञोक्तैर्नवैरत्र[7] तैर्द्रव्यैः परिधूपयेत्[8]। मेदोमज्जा-समायुक्तान् न धूपान् विनिवेदयेत्।[9]

1. Hemadri, CaturVC., गिरि-शृङ्गेषु दातव्या···There is an additional line after this :—

"चतुष्पथेषु रथ्यासु ब्राह्मणानाञ्च वेश्मसु।"

2. The verses beginning from गिरि-शृङ्गे up to this are in the विष्णु-धर्मोत्तर, CaturVC., chap. 13, Pp. 943-944

3. KalP., Chap. 69, vv. 31 ff. 4. v. r. धूमो।

5. v. r. यस्य। 6. v. r. तुष्टि-दायकः।

7. v. r. न चैकश। 8. v. r. परिपूजयेत्।

9. C. विनियोजयेत्। KalP., chap, 69, vv. 138-40 This statement agrees with KalP., chap. 69, v.

परकीयांस्तथा घ्रातांस्तैर्यैः कृत्वाभिमर्दितान् ॥ पुष्पं धूपञ्च गन्धञ्च उपहारांस्तथा फलम्[1]। घ्रात्वा निवेद्य देवेभ्यो नरो नरकमाप्नुयात्[2] ॥ न भूमौ वितरेद्धूपं नासने न घटे तथा। यथा तथाधार-गतं कृत्वा तं विनिवेदयेत्[3] ॥"

सर्व-देव-सम्प्रदाने तु दग्ध्वा एव धूपं दापयेत्; पितृ-सम्प्रदाने तु धूपोपयुक्त-सुरभि-द्रव्य-प्रदानमिति राज-प्रभृतयः।

देवी-पुराणे—

"दत्त्वा तु धूपं गङ्गायै स्वर्ग-लोके महीयते।
दीप-दानात् सुतेजस्कः सगन्धो गन्धदो भवेत् ॥"

पूजादि विधाय अद्य स्वर्गाधिकरणक-महितत्व-काम इमं धूपं भगवत्यै गङ्गायै तुभ्यमहं ददे। दक्षिणा च। भविष्ये—

"गङ्गायां कुश-दानेन ब्रह्म-लोकमवाप्नुयात्।" गङ्गायामिति सम्प्रदानेऽधिकरणमिदम्। चतुर्थ्यां सप्तमी-प्रयोगः। तथा च शैवे—"यः कुर्यात् कपिला-दानं ब्राह्मणेषु विशेषतः।" 'ब्राह्मणेषु' ब्राह्मणाय इत्यर्थः। एकत्वे बहुवचनमिदम्। तथा चाङ्गिराः[4]—"बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः[5]। विभक्त-दक्षिणा ह्येता दातारं तारयन्ति हि[6] ॥" 'एता' इति लिङ्गमविवक्षितम्, एतानीत्यर्थः। 'विभक्त-दक्षिणाः' प्रत्येकं कृत-

138. "हक-धूपेन वा देवीं महामायां प्रपूजयेत्। मेदोमज्जा-समायुक्तांश्च धूपान् विनियोजयेत् ॥"

1. C. उपचारांस्तथाऽपरान्। 2. A. चाधानवरमाप्नुयात् (?)।
3. C. तद्विनिवेदयेत्। 4. Not traced in AṅgSan.
5. BhavP., last parvan, chap. 152. v. 33.
6. BhavP., v. 34 (a) v. r. विभज्यमानान्येतानि दातारं पातयन्त्यधः।

दक्षिणाः। "एका एकस्य दातव्या न बहुभ्यः कदाचन[1]। सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम्[2]॥" तथा विष्णुधर्मोत्तरे—

"नृ-वाह्यं पुरुषो यस्तु द्विजे सम्यक् प्रयच्छति।" 'द्विजे' द्विजाय। 'नृ-वाह्यं' दोलादि।

नन्दी-पुराणे—"योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादयेत्।" तथा स्कान्दे—"योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादयेदि"ति। तथा "वृष्टि-मान-प्रदानेन कर्पूरस्य शिवे गुरौ"। शैवे "हेम्नां कोटिं प्रदद्याद् यो ब्राह्मणे वेद-पारगे। पलानां तच्छिवे दत्त्वा पलेनैकेन चाप्नुयात्॥" इति बहु-वचन-[3]दर्शनात् न गङ्गाऽधिकरणम् किन्तु सम्प्रदानमेव।

द्रव्य-पूजादि विधाय अद्य ब्रह्म-लोक-गमन-काम एतान् कुशान् विष्णु-दैवतान् गङ्गायै तुभ्यमहं ददे। दक्षिणा च। तथा "वैष्णवं यव-दानेन रुद्र-लोकमवाप्नुयात्। प्रायो द्वि तिल-दानेन होमैनैश्वर्यमाप्नुयात्॥" अद्य वैष्णव-लोक-प्राप्ति-काम एतान् यवान् प्रजापति-दैवतान् भगवत्यै गङ्गायै तुभ्यमहं ददे। अद्य रुद्र-लोक-प्राप्ति-काम एतांस्तिलान् प्रजापति-दैवतान् गङ्गायै तुभ्यमहं ददे। तथा, अद्यैश्वर्य-प्राप्ति-कामो गङ्गा-प्रीतये होममहं करिष्ये। तथा—"सदाशिव-पुरं साक्षादाज्य-दानेन चाप्नुयात्।" अद्य सदाशिव-पुर-प्राप्ति-काम इदमाज्यं विष्णु-दैवतं गङ्गायै तुभ्यमहं ददे।

भविष्ये—"गो-भू-हिरण्य-दाने च भक्त्या गङ्गा-तटे कृते।

---

1. Bhav P., uttara-parvan, chap 152, v 31 l. A. v. r...दातव्या मुनिभिः कथितं पुरा।

2. Bhav P., uttara-parvan, chap. 152, v. 34 (b).

3. A. वचन।

नरो न जायते भूयः संसारे दुःख-सागरे ॥" अद्य गङ्गा-तटे संसाराधिकरणक-पुनर्जननाभाव-काम इमां गां रुद्र-देवतां गङ्गायै तुभ्यमहं ददे। दक्षिणा च। प्रकरणाद् गङ्गैवात्र सम्प्रदानम्। तटस्थेन तु कर्त्तव्यमियान् विशेषः। भू-हिरण्ययोरेकतर-दानेऽप्ये तदेव फलम्।

तथा—"दीर्घायुष्ट्व वासोभिरश्व-दानेन सम्पदः। विद्या-दानेन वै ज्ञानं कीर्तिः कन्या-प्रदानतः॥" अद्य दीर्घायुष्ट्व-काम एतानि वासांसि बृहस्पति-दैवतानि गङ्गायै तुभ्यमहं ददे। अद्य बहु-सम्पत्-प्राप्ति-काम इदमश्वं प्रजापति-दैवतं गङ्गायै तुभ्यमहं ददे। ज्ञान-प्राप्ति-काम इदं पुस्तकं भगवत्यै गङ्गायै तुभ्यमहं ददे। विद्या-पदेनात्रोपचारात् पुस्तकमुच्यते, अनन्वयादित्यर्थः। अद्य सुकीर्ति-प्राप्ति-काम इमां कन्यां प्रजापति-दैवतां तुभ्यमहं ददे।

स्कान्दे—"यज्ञो दानं तपो जप्यं श्राद्धञ्च सुर-पूजितम्। गङ्गायाञ्च कृतं सर्वं कोटि-कोटि-गुणं भवेत्[1] ॥" गङ्गायां गङ्गा-तीरे इत्यर्थः। गङ्गायां जलमय-पदार्थायां दान-श्राद्ध-करणस्याविहितत्वादुपचारात् समीप-देश-गर्भादीनां ग्रहणम्[2]। अद्य गङ्गा-गर्भे कर्त्तव्यै तद्दान-जन्य-फल-कोटि-कोटि-गुण-फल-प्राप्ति-काम इदममुक-दानं यथादैवतं यथानाम-गोत्र ब्राह्मणायाहं सम्प्रददे[3]। दक्षिणा। द्रव्य-स्पर्शान्तं प्रतिग्रहम्[4]

1. Prāy T., chap. नन्दा-स्नान, p. 88, v. r. श्राद्धञ्च सुर-पूजनम्।

2. Raghunandana, "गङ्गायामिति तीर-परं श्राद्ध-सान्निध्यादिति गङ्गावाक्यावली"।

3. C. ददे।

4. C. तिग्रहं तु।

आग्नेयेनैव गृह्णीयात्। 'आग्नेय'' तीर्थम्। "मध्यमाग्नेयमि"ति हारीतेनोक्तम् 'मध्यः' कर-मध्यः। हारीतोक्तमेतत्॥

प्रतिग्रह-विधिमाह विष्णुधर्मोत्तरे—

"भूमिः प्रतिग्रहं कुर्याद् भूमेः कृत्वा प्रदक्षिणम्। करे गृह्य तथा कन्यां दास-दास्यौ द्विजोत्तमाः॥ करन्तु हृदि विन्यस्य धर्म्यो ज्ञेयः प्रतिग्रहः। आरुह्य च गजस्योक्तः कर्णे चाश्वस्य[1] कीर्तितः॥ तथा चैक-शफानान्तु सर्वेषामविशेषतः। प्रतिगृह्णीत गां पुच्छे पुच्छे कृष्णाजिनं तथा॥ आरण्याः पशवश्चान्ये ग्राह्याः पुच्छे विचक्षणैः। प्रतिग्रहमयोद्रस्य आरुह्य च तथा भवेत्॥ बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः। वस्त्रं दशान्तादागृह्य[2] परिधाय तथा पुनः॥ आरुह्योपानहौ यानमारुह्यैव च पादुके। ईशायान्तु रथं आरुह्य[3] छत्रं दण्डं च[4] धारयेत्॥ आयुधानि समादाय तथाभूष्य[5] विभूषणम्। वर्म-ध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम्॥ अवतीर्य च सर्वाणि जल-स्थानानि वै द्विजाः। द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्॥ समापयेत्ततः पश्चात् कामं स्तुत्वा[6] सुकीर्तितम्। विधिं धर्मरमय[7] ज्ञात्वा यस्तु कुर्यात् प्रतिग्रहम्। दाता सह तरत्येव[8] नरो दुर्गाण्यसौ[9] द्विजाः[10]॥" द्रव्य-पूजा-वाक्ये च तत्तत्-

1. A. कर्णे च तस्य। 2. A. आदद्यात्।
3. A. गृह्य। 4. C. दण्डे तु।
5. A. तथाज्ञाय। 6. S'uddhi T. v. r. काम-स्तुत्वा।
7. C. स्मृतिं तथा ; S'uddhi T., विधिं धर्म्यमयो ज्ञात्वा।
8. C. भवत्येव (?)। 9. A. दुःखान्यसौ।
10. For the verses "भूमेः प्रतिग्रहं कुर्यात्...दुर्गाण्यसौ द्विजाः", see S'uddhiT., chap. दान, p. 397, l. 11-399, l. 1.; said

पद-प्रयोगः। पवित्र-पाणित्व-भवनादि-द्रव्याभिषेचन-पर्यन्तं स्वस्ति-वाचनं दक्षिणा-दानं तदुत्तरं स्वस्ति-वाचनञ्च सर्व-दान-साधारणम्। प्रतिग्रहीतुर्देयस्यार्चादि विनियोग-प्रकारः दान-विशेष-विहितेति-कर्तव्यता च तत्तत्-प्रयोग-विधावेव विविच्य लिखितम्।

ततस्तु दक्षिणानन्तरं प्रतिग्रहीता ओं स्वस्तीत्युक्त्वा देय-द्रव्यं स्पृशेदुक्त-प्रकारेण। ततः "ओं कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते"[1] इति कामस्तुतिं वाजपेयी द्विजः पठेत्।

छन्दोगस्तु "ओं क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वां प्रतिगृह्णामि कामैतत्ते[2]॥" इति यथाशाखं काम-स्तुतिं पठेत्। एवं सर्वत्र दानेषु विधिर्बोद्धव्यः। न्यायोपार्जितेन[3] वित्तेन यथाविहितोक्त-पात्राय यथोक्त-विधिनैव दत्त्वैतत् फलं लभ्यते। दक्षः—"विधि-हीने तथाऽपात्रे यो ददाति प्रतिग्रहम्। न केवलं हि तद् याति शेषमस्य च नश्यति[4]॥"

---

to be taken from the भविष्योत्तर। After स्पृष्ट्वा वा ब्राह्मणः पठेत्, there is an additional verse, "प्रतिग्रह्य च सावित्रीं सर्वत्रैव प्रकीर्तयेत्। ततस्तु सार्धं द्रव्येण तस्य द्रव्यस्य दैवतम्॥"

1. S'uddhiT., chap. दान-प्रकरण, p. 418, ll. 10-11;

2. S'uddhiT., p. 418, ll. 12-14; v. r. कामेन त्वा प्रतिगृह्णामि।

3. v. r. C. न्यायोपात्तेन।

4. SmṛSam., DakS., chap. 3, v. 29, p. 78; v. r. न केवलं हि तद्दानं शेषमप्यस्य। Only the last line quoted by Raghunanandana in his S'uddhi T., chap. दान, p. 399, ll. 8-9.

'तद्' देय-द्रव्यम्। 'नश्यति' निष्फलं भवति। तदुक्त[1]-गुण-पात्रे दानं देयमेव। एतेन केवलया विद्यया तपसा वापि पात्रता न भवतीति दर्शितम्। पात्र-लक्षणन्त्वत्र विस्तर-भिया[2] नोक्तम्। अन्य-धर्म-शास्त्र-निरूपित-पात्राय दद्यात्।

यथोक्तं व्यासेन—"दयामुद्दिश्य यद्दानमपात्रेभ्योऽपि दीयते[3] दीनान्ध-कृपणेभ्यश्च तदानन्त्याय कल्पते॥" संवर्तश्च—"दानान्येतानि देयानि यथाऽन्यानि च सर्वशः। दीनान्ध-कृपणार्थिभ्यः[4] श्रेयस्कामेन धीमता[5]॥" 'कृपणो'ऽत्र विकलः। एतेषां दान-रूपेण न देयं किन्तु भरणीयत्वेन दातव्यमित्यर्थः।

यथा च महाभारते। "पङ्ग्वन्ध-बधिरा मूका व्याधिनोपहताश्च ये। भर्तव्यास्ते महाराज न तु देयः परिग्रहः[6]॥ पाद्मे—पङ्ग्वन्ध-बाल-वृद्धांश्च रोगिणोऽथ दरिद्रिणः। ये पुष्यन्ति सदान्नैश्च[7] ते मोदन्ते सदा दिवि॥" इति।

तथा च यमः। "न विद्यया केवलया तपसा चापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते[8]॥" 'तपसा'

---

1. C. तत्तु।
2. A. विस्तरतया।
3. V. r. अपात्रेभ्यः प्रदीयते।
4. V. r. कृपणादिभ्यः।
5. SaṃvartaS., v. 89, p. 416. v. r.···तथान्यानि विशेषतः; v. 91, p. 294. v. r. देयानि चान्यानि च विशेषतः। कृपणादिभ्यः श्रेयस्कामेन धीमता॥
6. S'uddhi T., chap. दान, p. 382, ll. 1-3; v. r.,...देयः प्रतिग्रहः।
7. A. पुष्यन्ति सदा वैश्च।
8. Not traced in YamaS; traced in Yaj S. v. 200, p. 158, v. r. तपसा वापि···। Also traced in S'uddhi T.,

केवलेन[1] । 'इमे' विद्या-तपसी । 'वृत्तम्' आचारः । आचारादिषु केवल-दर्शनाद् नैव ज्ञातव्यः ।

यमः—"शील' संवसता ज्ञेयं शौचं संव्यवहारतः । प्रज्ञा संकथनाज्[2] ज्ञेया त्रिभिः पात्रं परीक्ष्यते[3] ॥" 'शील" विचित्रम्—ब्रह्मण्यता देव-पितृ-भक्तता, समता, सौम्यता, अ-परोपतापिता, अनसूया, मृदुता, अपारुष्यं, मित्रता, प्रियवादित्वं, कृतज्ञता, शरण्यता, प्रशान्तिश्चेति त्रयोदश-विधम् । शौचं संव्यवहारत इत्यर्थः[4] । सौहृदेन विद्या-कथा 'संकथनम्' । 'त्रिभिः' संवास-संव्यवहार-संकथनैः । पितॄणां देवानाञ्च पात्रं परीक्ष्यते ज्ञायते । शिष्ट-वचनाद्वा दद्यादित्यर्थः । याज्ञवल्क्यः—

"एवं सर्वगुणोपेतमुक्त-दोषैर्विवर्जितम् । कामधुग्धेनु-दानं हि फलत्वाभिप्सितं फलम् । इह कीर्तिं वदान्याख्यां स्फीत-भोगांस्त्रिपिष्टपे[5] ।" कामधुग् धेनुर्यथा वाञ्छितं फलं यच्छति, तथैवेवम्भूतं दानमिति । कामधुगिति पद-च्छेदात् सर्व-कामप्रदं धेनु-दानं वशिष्ठादि-धेनुवदिति प्रकाशः । तत्र, "फलत्वाभिप्सितमि"ति पुनरुक्त-दोष-प्रसङ्गात् । 'वदान्याख्या' वदान्य-संज्ञा । वदान्यश्चातिदाता प्रसिद्धः । मनुः "योऽर्चितः प्रतिगृह्णाति दद्यादर्चितमेव च । तावुभौ गच्छतः स्वर्गं नरकं तद्विपर्यये[6] ॥"

---

chap. दान, p. 272, ll. 5-9 ; stated to be taken from the YājS. ; v. r. तपसा वाऽपि··तत्र पात्रं विनश्यति ।

1. A. केवलेन न । 2. A. संकथया ।
3. प्रतीक्ष्यते । Not traced in Yama S.
4. C. इत्यत्रापि ज्ञेयमित्यनुषज्यते ।
5. Not traced in Yaj S.
6. ManuS., chap. 4, v. 235, p. 173, v.r....प्रतिगृह्णाति

'चर्चितं पूजा-पूर्वकम्, विशेषणमेतत्। दान-दक्षिणा तु सम्भवे यत्नतः सुवर्णमेव देयम्। तथा च नन्दी-पुराणे—"तस्मात् सर्वात्मना पात्रे दद्यात् कनक-दक्षिणामि"ति[1]।

आराम-दानस्य। भविष्ये—"गङ्गा-तीरे नरो यस्तु प्लक्षाम्र-वकुलावृतम्। कदली-नारिकेलैश्च कपित्थाशोक-चम्पकैः॥ विचित्रं कारयित्वैवमारामं पुष्प-शोभितम्। शिवाय विष्णवे वापि दुर्गायै भास्कराय वा॥ प्रयच्छति तथा भक्त्या सर्वार्थं परिकल्पते। तस्य पुण्य-फलं वक्ष्ये संक्षेपात्र तु विस्तरात्॥ यावन्ति तेषां[2] वृक्षाणां पत्र-पुष्प-फलानि च। बीजानि च विचित्राणि तेषां मूलानि वै तथा। तावत् कल्प-सहस्राणि तेषां लोके स मोदते॥"

अद्येत्यादि तद्दातव्यारामस्य-वृक्ष-सम्भव-यावत्-पुष्प-यावत्-पत्र-यावत्-फल-यावद्बीज-यावन्मूल-तावत्-कल्प-सहस्र-शिव-पुराधिकरणक-मोदन-काम इमं गङ्गातीरस्थारामं प्लक्षाम्र-कदली-नारिकेल-कपित्थाशोक-चम्पकावृतं विष्णु-दैवतं भगवते शिवाय तुभ्यमहं सम्प्रददे। दक्षिणा च। एवं दुर्गा-विष्णु-भास्कराणामन्यतमस्मै दानेऽप्येतदेव फलम्। 'संप्रदानक-देव-लोकाधिकरणक-हर्ष-काम' इति वाक्ये विशेषः।

पायस-दानम्। भविष्ये—"पितॄनुद्दिश्य यो भक्त्या पायसं

---

दद्यात्यर्चितमेव वा।···नरकं तु विपर्यये। S'uddhi T., chap. दान, p 383, ll. 7-9.

1. S'uddhi T., chap. दान, p. 383, ll. 2 4; stated to be taken from chap. दान cit., p. 419, ll. 6-7, सुवर्णं परमं दानं, etc. the विष्णु-पुराण; v. r...कनकसुत्तमम्।

2. V. r. C. येषां।

मधुना सह। गुड-सर्पिःसमायुक्तं गङ्गाम्भसि विनिक्षिपेत्। तृप्ता भवन्ति पितरस्तस्य वर्ष-शत-त्रयम् ॥"

अद्य वर्ष-शत-त्रयावच्छिन्न-पितृ-तृप्ति-काम इदं पायसं मधु-गुड-सर्पिःसमायुक्तं गङ्गाम्भसि निक्षिपामि।

अथ प्रसिद्ध-दानम्।

तत्राङ्गिराः—"देवतानां गुरूणाञ्च मातापित्रोस्तथैव च। पुण्यं देयं प्रयत्नेन नापुण्यं देशितं क्वचित्[1] ॥"

'न देशितं' क्वचिदपि देयत्वेन न कथितमित्यर्थः। 'अपुण्यं' पापम्।

"कलाधं ब्राह्मणे दत्त्वा दाता यात्यशुभां गतिम्। जन्तु-र्निर्मोक-निर्मुक्तः पन्नगेन्द्रः क्षितौ यथा ॥"

नन्दी-पुराणे—"पापदः पापमाप्नोति नरो लक्ष-गुणं सदा। पुण्यदः पुण्यमाप्नोति शतशोऽथ सहस्रशः ॥ अपि पात्र-विशेषेण दानं स्यादुत्तरोत्तरम्। गुरु-मातृ-पितृ-ब्रह्मवादिनां दीयते तु यः। तल्लक्ष-गुणितं विद्यात् पापं पुण्यमथापि वा ॥"

"असद्द्रव्य-प्रदानमस्वर्ग्यं यच्च दत्त्वा परितप्यते। तद्दानम् अफलम् यच्चोपकारिणे दत्तम्। तथार्त्तं परिक्लिष्टं यच्च सोपधं ददाति। अन्य-याचितमफलं यच्चापात्राय ददाति। अनिष्ट-दानं स्रवति यच्च दत्त्वा परिवर्त्तते। स्वय-दानं तद्दानमासुरम् यच्चा-श्रद्धया ददाति। क्रोधाद्राक्षसम् यच्चाक्रुश्य ददाति दत्त्वा वाक्रोशति। असत्कृतं पैशाचम् यच्चावज्ञातं ददाति दत्त्वा वाऽवजानीते। मुमूर्षुं स्तामसम् यच्चाप्रकृतो ददाति। एते दानोप-सर्गाः[2]। यैरुपसृष्टं दानमसिद्धमस्वर्ग्यं मयशस्यमप्युत्यमफलं

1. Not traced in AṅgiS.

2. Traced in S'uddhiT, pp. 392-393; stated to be

भवत्यल्प-फलं वा । 'असद्द्रव्य' निषिद्धम् । 'तदंग्रदानं' तस्मिन्नेव संकल्प-काले दीयमान-द्रव्यासमर्पणम् । 'उपकारिणे' प्रत्युपकार-बुद्ध्या । 'तन्मात्र' यावद्दत्तं ततो नाधिक-फलम् । 'सोपधं' क्लेशा-द्युपाधि-सहितम् । 'अन्य-श्रावितं' लोक-सम्भावनार्थं प्रकाशितम् । 'अनिष्ट-दानम्' अनिष्टः शत्रुः, तस्मै दानं 'स्रवति' क्षरति अफलं[1] भवतीति यावत् । 'स्मय-दानं' स्मयो गर्वः न मत्सदृशः अपरो दाताऽस्तीति भाव-विशेषः, तेन भावेन यद्दानम् । 'क्रोधाद्राज्ञसमि'ति, अत्रापि ददातीत्यनुसीयते । 'आक्रोशः' परुष-भाषणम् । 'असत्कृतमवज्ञातमि'ति क्रिया-विशेषणम् । मुन्नू पुं-र्ददातीत्यनेनैवान्वयः । 'अप्रहृतो' मत्तादिः । 'उपसर्गा' दोषाः । असत्-प्रतिग्रहास्तु कृष्णाजिन-प्रतिग्रहीतारमधिकृत्य मत्स्य-पुराणे—

"न स्प्रष्टव्यः स द्विजो राजंश्चिति-यूप-समो हि सः ।
दाने च श्राद्ध-काले च दूरतः परिवर्जयेत् ॥"[2]

आदित्य-पुराणे—"किं करिष्यत्यसौ मूढो गृह्णन्नुभयतो-मुखीम् । सहस्रं वारुणाः पाशाः क्षुर-धारासि-सन्निभाः ॥ तस्य वर्ष-शते पूर्णे[3] पाश एकः प्रमुच्यते[4] । एतामवस्था-माप्नोति[5] गृह्णन्नुभयतोमुखीम् ॥"

---

taken from the HārS.; v. r. अन्य-श्रावितमल्प-फलम्...यच्च दत्त्वा परिकीर्त्तये-ते...आसुरं...no भवत्यन्यफलं ।

1. C. अल्प-फलं ।

2. MatsyaP., chap. 206, v. 23 b-24 a, p. 752 v. r. न स्प्रष्टव्योऽसौ द्विजो...तं दाने श्राद्ध-काले... । 3. C. जीर्णे ।

4. S'uddhiT., chap. दान, p. 401; stated to be taken from the आदि-पुराण; v. r....क्षुर-धाराग्नि-सन्निभाः । पूर्णे वर्ष-सहस्रे तु... । 5. C. प्राप्नोति ।

आग्नेय-पुराणे[1]—"हस्त्यश्व-रथ-यानानि मृत-शय्यासनानि च। कृष्णाजिनञ्च गृह्णाति अत्यासन्न[2]गतो द्विजः। उभयतो-मुखीं लोलां सशैलां मेदिनीं द्विजः। कूट-साक्ष्येण तौल्येन क्रयं क्रीणाति विक्रये[3]। सत्यक्त[4]दधनो लोके स प्रेतो जायते नरः॥"

एकादशाह-देय-शय्याधिकारे ब्रह्म-पुराणम्—"तेन कृष्णा तु सा शय्या न ग्राह्या द्विज-सत्तमैः। गृहीतायान्तु शय्यायां[5] पुनः संस्कारमर्हति॥ वेदेषु च पुराणेषु शय्या सर्वत्र गर्हिता। गृहीतायान्तु जायन्ते सर्वे नरक-गामिनः॥"

पुराणे सप्तर्षि-सम्मतं[6]—"गृह्णीयाद् द्विपद-चतुष्पद-धान्य-हिरण्य-वर्जम्।" धान्य-पदमत्र तिल-परम्। हिरण्य-पदं कपर्दक-परम्। अथ ब्रह्म-पुराणे—"ब्राह्मणः प्रतिगृह्णीयाद् वृत्त्यर्थं साधुतस्तथा। अप्यश्वमपि[7] मातङ्गं तिल-लौहानि वर्जयेत्॥ कृष्णाजिन[8]-तिलग्राही न भूयः पुरुषो भवेत्। शय्यालङ्कार-वस्त्रादि प्रतिगृह्य मृतस्य च। नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा॥"

तिलमयीं[9] केवल-तिलेनारब्धाम्।

"ब्रह्म-हत्या सुरा-पानमपि स्तेयं भविष्यति।
आतुराद् यद्[10] गृहीतन्तु तत् कथं वै तरिष्यति[11]॥

'आतुरात्' मुमूर्षोः। एतेन ग्रहीतुः पातित्यमापादयति यद्दानं तन्न देयमित्यर्थः[12]। अत एव गङ्गा-तीरे उत्सर्ग एव न तु

1. C. आग्नेये। 2. C. आलापं न। 3. C. विक्रयं। 4. A. सत्यक्तदधमा। 5. A. तथां सः। 6. A. सप्त-सम्मतं। 7. A. अनश्रयमपि। 8. C. शय्याजिन। 9. C. omitted. 10. C. तत्। 11. C. भविष्यति। 12. C. इति यावत्।

माच्छादापादनमिति। एतेषां दानानां विधान-वैयर्थ्या-पत्तिरिति यत् तत्राह विष्णुः—

"एतानि यदि गृह्णाति स्वेच्छयाऽभ्यर्थितो[1] न तु।
तस्मै दाने न दोषोऽत्र यस्त्वात्मानन्तु तारयेत्॥"

'एतानि' उभयतोमुख्यादीनि। 'यात्मानन्तु तारयेदि'ति एत-द्दान-ग्रहणानन्तरोक्त-तपो-जप-व्रतादि-नियमैर्य आत्म-तारण-क्षमो भवेत् स्वयमागत्य प्रार्थयेदेतद्दानं मह्यं देहि तस्मै देयमित्यर्थः।

ये तु मन्यन्ते—"गङ्गायां कुश-दानेन ब्रह्म-लोक-मवाप्नुयात्" इत्यत्र गङ्गाऽधिकरणं सम्प्रदानं त्वगत्, तत्रतेऽपि जले दान-करणस्य प्रतिषिद्धत्वात्[2] लक्षणया गङ्गा-गर्भ समीप-वर्ति-देशे कर्त्तव्यम्। तथा च स्मृतिः—

स्नात्वा शुद्धे समे देशे गोमयेनोपलेपिते।
वसित्वा वसनं शुष्कं दानं दद्यात् सदक्षिणम्॥"

एवं दर्शनाद् जले दान-विधानाभावादित्यर्थः। अद्य गङ्गा-गर्भे अमुक-फल-प्राप्ति-काम इदममुक-वस्तु यथादैवतममुक-गोत्रायेत्यादि। एतत्तु न सर्वेषां सम्मतमित्यर्थः।

शिव-लिङ्गादि-स्थापनम्।

भविष्ये—"स्थाणुं स्फाटिक-संस्कारं गङ्गा-तीरे करोति यः। शिव-लोके च शिववत्तस्याक्षय्यसुखं भवेत्॥" अद्य शिव-पुराधिकरणक-शिववदक्षय्य[3]-सुख-प्राप्ति-कामः स्फाटिक-स्थाणुमहं करिष्ये।

तथा—"शिवस्य विष्णोः सूर्यस्य दुर्गाया ब्रह्मणस्तथा। गङ्गा-तीरे प्रतिष्ठान्तु यः कुर्यात्तु नरोत्तमः। तथैवायतनं तेषां

---

1. A. स्वेच्छया कथितो।    2. C. अप्रसिद्धत्वात्।
3. A. शिववत्तस्याक्षय्य (?)।

कारयित्वा स्व-शक्तितः। अन्य-तीर्थेषु करणात् कोटि-कोटि-गुणं भवेत् ॥"

अद्य[1] अन्य-तीर्थाधिकरणक-शिव-लिङ्ग-प्रतिष्ठा-जन्य-फल-कोटि-कोटि-गुण-फल-प्राप्ति-कामो गङ्गा-तीरे भगवतः शिवस्य[2] लिङ्ग-प्रतिष्ठामहं करिष्ये। प्रतिष्ठा-विधिस्तु मत्स्य-पुराणे उक्तः[3]। विष्णु-सूर्य-दुर्गा-ब्रह्मणामेकतमस्य प्रतिमायाः प्रतिष्ठा-करणेऽप्येतदेव फलम्। एतेषां देवानां गङ्गा-तीरायतन-करणेऽप्येतदेव फलम्। वाक्ये तु प्रतिष्ठा-जन्य-फल-पदमपहाय आयतन-पद-प्रयोगो विशेष इति।

भविष्ये—"मृदा दार्विष्टका-शैलैः कुर्यात्तु शिवालयम्।
[ त्रि[4](?) हि ]-सप्त-कुल-संयुक्तः शिव-लोके महीयते ॥"

अद्य चतुर्दश-कुलान्वित-शिव-लोक-महितत्व-कामो मृदा भगवतः शिवस्यायतनमहं करिष्ये।

तथा दारुमयायतनस्य—

"मृण्मयात् कोटि-गुणितं फलं स्याद्दारुभिः[5] कृते।"

अद्य मृण्मयायतन-करण-जन्य-फल-कोटि-गुण-फल-प्राप्ति-कामो दारुभिर्भगवतः शिवस्यायतनमहं करिष्ये।

तथा—"कोटि-कोटि-गुणं पुण्यं दारुतश्चेष्टकामये[6]।"

अद्य दारुमयायतन-करण-जन्य पुण्य-कोटि-कोटि-गुण-पुण्य-प्राप्ति-कामनया इष्टकाभिर्भगवतः शिवस्यायतनमहं करिष्ये।

लिङ्ग-स्थापनस्य। भविष्ये—

1. C. omitted.
2. A. शिव-लिङ्गस्य।
3. MatsyaP., chap. 824. p. 915.
4. C. त्रिः।
5. C. तद्दारुभिः।
6. A. दारुभिरिष्टकामये।

"यो लिङ्गं स्थापयेद्देवं विधि-पूर्वं सदक्षिणम्। सर्वांगमोदितं पुण्यं कोटि-कोटि-गुणं भवेत्.॥ मातृजान् पितृजांश्चैव यतश्चोद्धरते प्रियम्। कुलैकविंशमुत्तार्य शिव-लोके महीयते॥ भुक्त्वा च विपुलान् भोगान् प्रलये समुपस्थिते। ज्ञान-योगं समासाद्य तत्रैव स विमुच्यते[1] ॥"

अद्य सर्वांगमोदित-पुण्य-प्राप्ति-मातृक-पैतृक-श्वशुरैकविंशति-कुल-नरकोत्तारण-पूर्वक-शिव-लोक-महितत्व-विपुल-भोग-भुक्ति-पूर्वक-प्रलय-कालिक-ज्ञान-योग-हेतु-विमुक्ति-प्राप्ति-कामो भगवतः शिवस्य लिङ्ग-स्थापनमहं करिष्ये। विधिर्मत्स्य-पुराणोक्तः।

हयशीर्ष-पञ्चरात्रे —

"वापी-कूप-तडागानां सुवर्णानां तथा लघु। प्रतिमानां सभानाञ्च समभ्यर्च्य[2] नरो भुवि॥ पुण्यं शत-गुणं तस्य भवेन्मूलान्न संशयः॥" अद्य शिव-गृह-करण-जन्य-पुण्य-शत-गुण-पुण्य-प्राप्ति-कामनया जीर्ण-शिव-गृहोद्धारमहं करिष्ये। [3]सामान्य-स्थाने करणादिदं फलम्। द्वितीये तु कोटि-कोटि-गुण-विधानाद्विशेषः। एवमन्येषां देवानामपि करणे यथायथं फलमित्यर्थः[3]।

पाद्मे—"तद्गृहं काऽन्यत्र यः कुर्यात् स गच्छेन्निरयं महत्।"

तथा—"देव-विप्र-यतीनाञ्च मठे लोभ-समन्वितः। तत्राधिपत्यं यः कुर्यात् सर्व-धर्म-बहिष्कृतः॥ स पच्यते महाघोरे रौरवे नरकेऽव्यये[4]। पत्रं पुष्पं फलं तोयं द्रव्यमन्यन्मठस्य तु। योऽश्नाति लभते मोहान्नरकाण्येकविंशतिम्॥ यमिच्छेन्नरकं नेतुं[5] सपुत्र-पशु-बान्धवम्। तं देवेष्वधिपं कुर्याद्गोषु च

---

1. C. परिमुच्यते। 2. A. समभ्यर्च्य।

3-3. C. omitted.

4. A. नरक-पथे। 5. C. नरकान्ते तु।

ब्राह्मणेषु च ॥ यमोज्यमाचनामन्नं (?) भुक्त्वा चान्द्रायणञ्चरेत्। स्पृष्ट्वा मठ-पतिं वैश्य सचेलो जलमाविशेत् ॥" तथा च स्कान्दे—"दृष्ट्वा तु मंस्मरेद्विष्णुं सचेल-जलमाविशेत्। स्पृष्ट्वा तु सत्वरं देवि शिव-निर्माल्यभोजिनम् ॥" पाद्मे—"द्रव्यमन्नं फलं तोयं शिव-द्रव्यं स्पृशेत् क्वचित्। निर्माल्यं नैव संस्पृश्यं कूपे सर्वञ्च निक्षिपेत् ॥ भक्षिका-पाद-मात्रं यः शिव-स्वमुपजीवति। महा-लोभात् स पच्येत कल्पान्तं नरके नरः ॥"

कालोत्तरे—"देव-द्रव्यं गुरु-द्रव्यं न चात्मनि नियोजयेत्। उपेक्षा चाथवा दानं रक्षितव्यं प्रयत्नतः ॥" रामायणे—"ब्राह्मण-द्रव्यमादत्ते देवानाञ्चापि राघव। सद्यः पतति घोरेऽस्मिन् नरके वीचिसंप्लवे ॥" निष्ठाकलिकायाम्—"स्वयं देवस्व-हरणं काष्ठ-पात्रे प्रपूजनम्[1]। स्नपनं वेत्र-पात्रे च त्रयं दारिद्र्य-लक्षणम् ॥" शिव-पुराणे—"यस्तु शङ्कर-निर्माल्यं पादे-नाक्रमते नरः। षष्टि-वर्ष-सहस्राणि तिर्यग्योनिषु जायते ॥" कालिका-पुराणे—"स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा चाप्लुतः शुचिः।" एतदपनीत-निर्माल्यैर बोद्धव्यम्, "ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्। तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ॥" इति स्कान्द-पुराण-वचन-विरोधात्। तत्तु धारणार्थ-विलक्षणाशुच्यशेवादेः (?)स्पर्श-विषयमित्यर्थः।

अथ सामान्य-दानम्।

तत्र घृत-धेनु-दानम्।

भविष्ये—"यस्त्वक्षय-तृतीयायां गङ्गा-तीरे ददाति वै। घृत-धेनुं विधानेन तस्य पुण्य-फलं शृणु ॥ कल्प-कोटि-सहस्राणि

1. C, पात्रे स पूजनम्।

कल्प-कोटि-शतानि च। सहस्रादित्य-संकाशः सर्वं-काम-समन्वितः॥ हेम-रत्नमये चित्रे विमाने हंस-भूषिते। स्वकीय-पितृभिः सार्धं स्वर्ग-लोके महीयते॥ ततस्तु जायते विप्रो गङ्गा-तीरे धनान्वितः। अन्ते तु ब्रह्मविद् भूत्वा मोक्षमाप्नोत्यसंशयम्॥"

तत्रादौ धेनु-विधानम्। मत्स्य-पुराणे—"गुड-धेनु-विधानस्य[1] यद् रूपमिह यत् फलम्। तदिदानीं प्रवक्ष्यामि सर्व-पाप-प्रणाशनम्[2]॥ कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं[3] विन्यसेद् वि। गोमयेनोपलिप्तायां[4] दर्भानास्तीर्य यत्नतः[5]॥ लघ्वेणकाजिनं[6] तद्वद्वत्सस्य परिकल्पयेत्। प्राङ्मुखीं कल्पयेद्धेनु-[7]मुदक्पादां सवत्सकाम्[8]॥ उत्तमा गुड-धेनुः स्यात् सदा भार-चतुष्टयम्[9]। वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता[10]॥ अर्ध-भारेण

---

1. C. प्रदानस्य।

2. PadmaP., p. 292; MatsyaP., chap. 82, p. 258, सर्व-पाप विनाशनम्; AgniP., chap. 210, p. 397, vv. 13—

3. MatsyaP., p. 258, v. r.···प्रागग्रम्...

4. AgniP. v. 14, p. 397, गोमयेनानुलिप्तायां।

5. Op. cit. सर्वतः; also Hemādri, दान-खण्ड, chap. 7. p. 398.

6. Hemadri, op. cit., लघ्वेणकाजिनं; AgniP., लघ्वेणकाजिनं; PadmaP., सृष्टि-खण्ड, chap. 21, v. 54, p. 292, same as हेमाद्रि; also same in MatsyaP., p. 258.

7. Hemādri, op. cit, प्राप्येद्धेनु···

8. C. सवत्सिकाम् (?) PadmaP., op. cit., सदा वा गोः सवत्सकाम्।

9. Hemādri, op. cit., सदा भारमनुत्तमम्।

10. MatsyaP. chap. 82, v. 5, v. r. द्वाभ्यां वै; Hemadri

वत्सः स्यात् कनिष्ठा भारकेण तु। चतुर्थांशेन वत्सः स्याद् गृह-वित्तानुसारतः[1] ॥"

तथा चायं द्रव्य-ह्रासस्तेन मुख्य-कल्प-(शब्दे न ?) सम्भवे न कल्पान्तरमाश्रयणीम्। "प्रभुः प्रथम-कल्पस्य योऽनुकल्पेन वर्तते। न साम्परायिकन्तस्य दुर्मतेर्विद्यते फलम्॥" इति कात्यायनेन निषेधात्[2]। 'साम्परायिकं' पारलौकिकम्। "धेनु-वत्सौ कृतौ चोभौ[3] सित-सूक्ष्माम्बरावृतौ। शुक्ति-कर्णाविक्षु-पादौ शुचि-मुक्ताफलेक्षणौ॥ "सित-सूत्र-शिरालौ द्वौ[4] सित-कम्बल-कम्बलौ। ताम्र-गड्डुक-पृष्ठौ[5] द्वौ[6] सित-चामर-रोमकौ॥ विद्रुम-भ्रू-युगोपेतौ[7] नवनीत-स्तनान्वितौ[8]। क्षौम-पुच्छौ

reads after प्राङ्मुखौ…सवत्सकाम्—"तदुत्तरेण वत्सोऽपि तथैव परिकल्पनीयः"; उत्तमा गुड-धेनुः…वत्सं भारेण कुर्वीत भाराभ्यां मध्यमः स्मृतः॥

1. v. r. A., गृह-वित्तानुभावतः।

2. Not traced in कात्यायन-संहिता। शूलपाणि in his श्राद्ध-विवेक, pp. 142-143, says that the verse appears in the छन्दः-परिशिष्ट।

3. A. धेनु-वत्सौ घृताख्यौ तौ। MatsyaP., chap. 82, v. 7, p. 259; v. r. धेनु-वत्सौ घृताख्यौ च।

4. Hemadri, op. cit., p. 399, तौ; AgniP., p. 397, v. 20, च; MatsyaP., p. 259, same as हेमाद्रि।

5. PadmaP., सृष्टि-खण्ड, chap. 21, v. 58, p. 993, v. r. गण्डक-पृष्ठौ। MatsyaP., also same p. 259, v. 8.

6. MatsyaP., op. cit., v. r. तौ; Hemadri, op. cit., तौ; also AgniP., p. 397, v. 20.

7. PadmaP. and Agni P., op. cit., युगान्वितौ।

8. MatsyaP., op. cit., नवनीत-स्तनावुभौ।

कांस्य-दोहाविन्द्रनीलक-तारकौ[1] ॥ सुवर्ण-शृङ्गाभरणौ राजत-खुर-संयुतौ[2] । नाना-फल-समायुक्तौ[3] घ्राणौ गन्ध-करण्डकौ[4] । 'गन्ध-करण्डकः' सुरभि-गन्धाढ्य-द्रव्यं कर्पूरादिः । इत्येवं रचयित्वा तु धूप-दीपैरथार्चयेत् ॥"

"या लक्ष्मीः सर्व-भूतानां या च देवेष्ववस्थिता । धेनु-रूपेण सा देवी मम शान्तिं प्रयच्छतु[5] ॥ देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया । धेनु-रूपेण सा देवी मम पापं व्यपोहतु ॥ विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च[6] विभावसोः[7] चन्द्रार्क-शक्र-शक्तिर्या धेनु-रूपाऽस्तु सा श्रिये[8] ॥"

"चतुर्मुखस्य या लक्ष्मीर्लक्ष्मीर्या धनदस्य च । लक्ष्मीर्या लोक-पालानां सा धेनुर्वरदाऽस्तु मे ॥ स्वधा या पितृ-लोकानां[9]

---

1. PadmaP., op. cit., v. 60, v. r. दोहौ शुभातिकमनीयकौ ।

2. PadmaP., op. cit., v. 6, राजताढ्य-खुरौ च तौ । MatsyaP., op. cit., राजतैः खुर-संयुतौ ।

3. V. r. Hemadri, op. cit., नाना-फलमयैर्दन्तैः ।

4. PadmaP., op. cit., घ्राणा-गन्ध-करण्डकौ ; MatsyaP., op. cit., same,

For the above verses, See MatsyaP., pp. 258—260 ; AgniP., chap. 210, p. 397f. ; PadmaP., p. 223f. ; DanaKKau. of Govindananda, p. 58f. ( order of verses not same ) ; DanaC. of Divakara, fol. 88 (a) f. ; DanaMay., p. 172f.

5. MatsyaP, PadmaP, and Hemadri, v. r. पापं व्यपोहतु ।

6. A. यथा ।

7. PadmaP., सृष्टि-खण्ड, chap. 21, v. 63, v. r. विभावसौ ।

8. Op. cit., सा धेनुर्वरदाऽस्तु मे ।

9. A. पितृ-मुख्यानां । MatsyaP., chap. 82, v. 15 Hemadri, "स्वधा त्वं"··· ।

स्वाहा यज्ञभुजाञ्च या[1]। सर्व-पापहरा धेनुस्तस्माच्छान्तिं[2] प्रयच्छ मे॥ एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत्। विधानमेतद्धेनूनां सर्वासामिह पठ्यते[3]॥ यास्तु[4] पापविनाशिन्यः पठ्यन्ते दश धेनवः। तासां स्वरूपं वक्ष्यामि नामानि च नराधिप॥ प्रथमा गुड-धेनुः स्याद् घृत-धेनुस्तथा परा[5]। तिल-धेनुस्तृतीया तु[6] चतुर्थी जल-संज्ञिता[7]॥ क्षीर-धेनुश्च विख्याता[8] मधु-धेनुस्तथा परा। सप्तमी शर्करा-धेनुर्दधि-धेनुस्तथाऽष्टमी[9]। रस-धेनुश्च नवमी[10]दशमी स्यात् स्व-रूपतः॥ कुम्भाः स्युर्द्रव्य-धेनूनामितरासान्तु राशयः। [11]सुवर्ण-धेनुरप्यत्र केचिदिच्छन्ति मानवाः॥ नवनीतेन तैलेन[12] तथाऽन्येऽपि महर्षयः॥

"एतदेव विधानं स्यात्तत्र चोपस्कराः स्मृताः। मन्त्रावाहन-

---

1. V. r. in last line, स्वाहा यज्ञभुजान्तथा।
2. PadmaP., सृष्टि-खण्ड, chap. 21, v. 64, तस्माद्भूतिं।
3. PadmaP., op. cit., सर्वासामपि पठ्यते; MatsyaP., सर्वेषामभिपठ्यते। See also below.
4. MatsyaP., chap. 82, v. 17, v. r. याश्चाः।
5. PadmaP., घृत-धेनुस्तथापरा।
6. Op. cit., च। 7. Op. cit. जल-नामिका।
8. Op. cit., क्षीर-धेनुः पञ्चमी च।
9. Hemadri, नवनस्यार्पणी तथा; PadmaP., op. cit., अष्टमी दधि-कल्पिता।
10. Hemadri, कार्पास-धेनुर्नवमी।
11. Add. r. in C.
12. MatP., chap. 82, v. 21, p. 260, रत्नेन।

संयुक्ताः सदा पर्वणि पर्वणि ॥ यथाशक्त्या[1] प्रदातव्या भुक्ति-मुक्ति-फलप्रदाः । धेनवो दश ता एताः[2] सर्व-पाप-हराः शुभाः[3] ॥ अयने विषुवे पुण्ये व्यतीपातेऽथवा पुनः । गुड-धेन्वादयो देया उपरागादि-पर्वसु[4] ॥"

[5]अत्र घृतादि-धेनु-द्रव्य-परिमाणमपि गुड-धेनुवदेव, "विधान-मेतद्धेनूनां सर्वासामपि पठ्यते" इति सामान्येनातिदेशात् ।

'कुम्भाः स्युर्द्रव्य-धेनूनामितरासाञ्च राशयः'

इति भार-चतुष्टयादि-परिमित-द्रव्य-व्यवस्थापन-प्रकार-कथनम्[5] । एवञ्च घृतादि-धेनुष्वपि कृष्णाजिन-धारणम् । कुम्भ-कथनेनापि तदबाधनात्, "एतदेव विधानं स्यादि"ति वचनाच्च । केचित्तु नात्राजिनमिच्छन्ति । भारस्तु पल-सहस्र-द्वयात्मकः । तत्राह—"तुला पल-शतं ज्ञेयं भारः स्याद्विंशतिस्तुला" इति ।

गोमयेनोपलिप्तायां भूमौ कुशानास्तीर्य तत्र प्राग्ग्रीवं चतुर्हस्तं कृष्णाजिनं धेनुं पातयित्वा, तत्-समीपे लघु कृष्णाजिनं प्राग्ग्रीवमेव वत्सार्थं धृत्वा, तदुपरि शक्त्यनुसारेण[6] भार-चतुष्ट-

1. A. यथाशुद्धं ।

2. C. एता एव समाख्याताः ।

3. In Hemadri, there is an additional line after this : "अग्रीय-यज्ञ-फलदाः सर्व-पाप-हराः शुभाः ।"

4. A. उपवासादि-पर्वसु । For the above verses, see MatsyaP., chap. 83, p. 260.

5-5. This portion agrees almost verbally with Hemadri, p. 400, l. 22—p. 401, l. 3 ; Hemadri, v. r., द्रव्यस्य कुम्भाधारतयाऽवस्थान-प्रकार-कथनम् ।

6. C. शक्त्यनुरूपेण ।

येन भार-द्वयेन एक-भारेण [वा] गव्य-घृतेन घटेषु स्थापितेन[1] धेनुं, यथाक्रमम् एक-भारेण अर्ध-भारेण भार-चतुर्थांशेन वा गव्यघृतेनैव घटस्थेन वत्समुपकल्प्य, उभावपि प्राङ्मुखौ उदक्-पादौ घृताक्तौ श्वेत-सूक्ष्म-वस्त्र-वेष्टितौ शुक्तिमय-कर्णौ इक्षुमय-पाद-चतुष्टयौ श्वेत-मुक्तामय[2]-लोचन-द्वयौ, तदभ्यन्तरस्थेन्द्र-नीलमय-तारा-द्वयौ[3], सूत्रात्मक-शिरालकौ, श्वेत-कम्बलमय-सास्नाकौ, ताम्रमय-गडुक[4]-पृष्ठौ, सित-चामर-रोमाणौ, प्रवाल-मय-[5]भ्रू-युग्मौ नवनीत-स्तनौ, क्षौम-पुच्छौ, कांस्य-दोहौ, सुवर्ण-शृङ्गौ, राजत-खुरौ, नाना-फल-समायुक्तौ अगुरु-प्रभृति-द्रव्य मिलित-घ्राणौ, एवं धेनु-वत्सौ निर्माय ओं सोपकरण-स-वत्स-घृत-धेनवे नमः । एवं[6] वार-त्रयम् । एवं धूपं ततो दीपं ततो नैवेद्यं दत्त्वा, ओं ब्राह्मणाय नम इति विप्रं संपूज्य इमां सोपकरणां सवत्सां घृत-धेनुं ददानि[7] इति द्विज-करे जलं दत्त्वा धेनुं प्रोच्य "ओं या लक्ष्मी"रित्यादि-श्लोक-पञ्चकं पठित्वा कुश-त्रय-तिल-जलान्यादाय ओं अद्याचय-तृतीयायां गङ्गा-तीरे बहु-कल्प-कोटि-शतावच्छिन्न[8]-हेम-रत्नमय-विचित्र-हंस-विभूषित-विमाना-धिकरणक-स्वीय-पितृ-गण-सहित-सहस्रादित्य[9]-संकाश-सर्व-काम-समन्वित[10]-रुद्र-सहित-महितत्व-तदुत्तर-गङ्गाधिकरणक[11]-धना-न्वित-विप्रत्व-भवनान्त-कालिक-ब्रह्मविद्भवनानन्तर-मोक्ष-प्राप्ति-काम

1. A. घटे प्रस्थापितेन ।
2. C. द्वय ।
3. C. मयौ ।
4. C. ताम्र-गडु कमय ।
5. A. प्रवाल-द्वय ।
6. C. इति ।
7. C. ददामि ।
8. A. बहु-कल्प-कोटि-सहस्रावच्छिन्न ।
9. C. स्वादित्य ।
10. C. स्वीय-रुद्र ।
11. C. गङ्गा-तीराधिकरणक ।

इमां गोमयोपलिप्तास्तीर्ण-कुश-भूम्युपरिस्थ-लघु-प्रागग्रीवैणाजि-नस्थ-घृतास्य-सित-सूक्ष्माम्बराहृत-शुक्ति-कर्णेक्षुमय-चतुष्पाद-शुचि-मुक्ताफलेक्षण-सित-सूत्र-शिरालक-सित-कम्बल-कम्बल[1] ताम्र-गड्डुक-पृष्ठ-सित-चामर-रोमक-[2] विद्रुम-भ्रू-युगोपेत[3]-नवनीत-स्तनान्वित-क्षौम-पुच्छ-कांस्य-दोहेन्द्रनील-तारक-सुवर्ण-शृङ्गाभरण-राजत-खुर-नाना-फल-समायुक्त-विशिष्ट-गन्धमय-नासिका-चतुर्थ-भाग-परिमित-घृतमय-वत्स-सहितां गोमयोपलिप्ता-स्तीर्ण-कुश-भूम्युपरिस्थ-चतुर्हस्त-प्रागग्रीव-कृष्णाजिन-स्थितां प्राङ्मुखीमुदक्-पादां घृतास्यां सित-सूक्ष्माम्बराहृतां शुक्ति-कर्णामिक्षुमय-चतुष्पादां शुचि-मुक्ताफलेक्षणां सित-सूत्र-शिरालकां सित-कम्बल-कम्बलां ताम्र-गड्डुक-पृष्ठां सित-चामर-रोमकां विद्रुम-भ्रू-युगोपेतां नवनीत-स्तनान्वितां क्षौम-पुच्छां कांस्य-दोहामिन्द्रनील-तारकां सुवर्ण-शृङ्गाभरणां राजत-खुरां नाना-फल-समायुक्तां विशिष्ट-गन्ध-मय-नासां घृतमयीं धेनुं विष्णु-देवताम् अमुक-गोत्रायामुक-देव-[4] शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। ॐ स्वस्तीति प्रतिवचनम्। ततः ॐ अद्यैतत् सोपकरण-सवत्स-घृत-धेनु-दान-प्रतिष्ठार्थं दक्षिणामिदं सुवर्णमग्नि-दैवतम् इत्यादि। ततः पुच्छं धेनुं स्पृष्ट्वा द्विजो यथाशास्त्रं वाम-स्तुतिं पठेत्।

अथ[5] गो-मात्र-दानम्[6]।

"तथैव गो-प्रदानस्य विधिना कुरुते तु यः[7]। गो-लोम-

---

1. C. कम्बल-कम्बलां। 2. C. रोमकां। 3. C. युगोपेताम्।
4. Omitted in A. 5. A. तथा।
6. C. प्रदानम्। For गो-दान, see, DanaKK. of Govindānanda, p. 53; Dana May., p. 184; Hemadri's CaturVC., दान-खण्ड, p. 466f; BhavP, uttara, chap. 151, p. 514f. 7. C. तथैव। गो-प्रदानस्य विधिना कुरुते यः प्रयत्नतः।

संख्यया यावत् कल्पान्यर्बुद-संख्यया[1] ॥ गोलोके शिव-लोके वा काम-धेनु-प्रजान्वितः[2] । भुञ्जानः सर्व-कामांस्तु दिव्यान्नाना-विधान् बहून् ॥ देवानामप्यलभ्यांश्च स्थित्वा तु सह-बान्धवः[3] । पितृभिश्च सुहृद्भिश्च सर्व-रत्न-विभूषितः ॥ जायते सत्-कुले पश्चाद्धन-धान्य-समाकुले । रत्न-काञ्चन-भू-पूर्णे शील-विद्या-यशोऽन्विते ॥ स भुक्त्वा विपुलान् भोगान् पुत्र-पौत्र-समन्वितः । सर्व-दुःख-विनिर्मुक्तः सर्व-काम-समन्वितः । सर्व-प्राणि-प्रियो भूत्वा ततो मोक्षमवाप्नुयात् ॥"

गो-ब्राह्मणौ संपूज्य द्विज-करे जलं दत्त्वा गामासिच्य[4] यों ऽद्यात्रय-तृतीयायां गङ्गा-तीरे गो-रोम[5]-सम-संख्य-कल्पार्बुदा-वच्छिन्न-[6] गोलोक-शिव-लोकान्यतराधिकरणक[7]-बान्धव-पितृ-सुहृत्-सहित-काम-धेनु-प्रजान्वित[8]-स्वीय-दिव्य-नानाविध-देवा-लभ्य-सर्व-कामोपभोग-रत-स्थिति-तदनन्तर-धन-धान्य-समाकुल-रत्न-[9]काञ्चन-भू-पूर्ण-शील-विद्या-यशोऽन्वित-सत्[10]-कुलाधिकर-णक-जन्म-पुत्र-पौत्र-समन्वित-[11]सर्व-दुःख-विनिर्मुक्तत्व-सर्व-काम-समन्वित[12]-सर्व-प्राणि-प्रिय-त्व-कर्तृक-विपुल-बहु-भोगोपभोग-तदुत्तर-मोक्ष-प्राप्ति[13]-काम इमां गां रुद्र-दैवतामित्यादि । दक्षिणादिकं पूर्ववत् ।

---

1. A. कल्पार्बुद-संख्यया ।
2. A. पूजान्वितः ।
3. C. बान्धवैः ।
4. Omitted in C.
5. C. लोम ।
6. C. कल्पान्यर्बुदावच्छिन्न ।
7. A. लोकाधिकरणक ।
8. A. पूजान्वित ।
9. A. सर्व-रत्न ।
10. Omitted in C.
11. C. समन्वितत्व ।
12. C. मोक्षावाप्ति ।

तत्र कपिला-दानम्[1] ।

तथा—"कपिला यदि दत्ता स्याद्विधिना वेद-पारगे ।
नरकस्थान् पितॄन् सर्वान् स्वर्गं नयति वै तदा ॥"

कपिला-गव्यै नमः । वार-त्रयम् । ब्राह्मणाय नमः । ओं कपिलां गाम् इमां ददानि इति द्विज-करे जलं दद्यात् । ततः कपिला-गामासिच्य ओं अद्यामुक-तृतीयायां गङ्गा-तीरे नरकस्थ-सर्व-पितृ-स्वर्ग-नयन-काम इमां कपिलां गां रुद्र-दैवताम् अमुक-गोत्रायेत्यादि सर्वं पूर्ववत् ।

अथ भूमि-दानम्[2] ।

निवर्तन-द्वयस्य । तथा—

"निवर्तन-द्वयं भूमेर्गङ्गा-तीरे विशेषतः । विप्राय वेद-विदुषे तिथौ तस्यां विशेषतः ॥ नरो ददाति भक्त्या वै[3] तस्य पुण्य-फलं शृणु । तद्भूमि-परमाणूनां संख्ययाऽयुत-संख्यया ॥ सोऽमेन्द्र-ब्रह्म-लोकेषु विष्णु-लोके तथैव च । शिव-लोके तथा श्रीमान् भोगान् भुङ्क्ते तथाविधान् ॥ जायते रूप-सम्पन्नः सर्व-शोक-विवर्जितः । सर्व-सम्पत्-समृद्धस्तु[4] सप्त-द्वीप-पतिर्भवेत् ॥ भेरी-शङ्खादि-निर्घोषैर्गीत-वादित्र-निस्वनैः । स्तुतिभिर्मागधानाञ्च सुप्तोऽसौ प्रतिबुध्यते ॥ सर्व-सौख्यान्यवाप्यैह सर्व-धर्म-परायणः ।

1. Cp. DānaMay., p. 171, ll. 21 ff ; DānaKK., pp. 121—123 ; BhavP., p. 520f ; CaturVC., दान-खण्ड, p. 46 ; DānaC., p. 57f.

2. Cp. DānaKK., p. 39 ; CaturVC., pp. 494—512 ; BhavP., pp. 523-524 ; DānaC., p. 51f.

3. C. यो भक्त्या ।

4. A. सर्व-सम्पत्-समृद्धः स्यात् ।

नरकस्थान् पितॄन् सर्वान् प्रापयित्वा दिवं तथा ॥ स्वर्ग-स्थितान् पितॄन सर्वान् मोचयित्वा महाद्युतिः। अन्ते ज्ञानासिना छित्त्वा अविद्यां पञ्च-पर्विकाम्। परं वैराग्यमापन्नः परं ब्रह्माधिगच्छति ॥"

'अयुत-संख्ययें'त्यत्र तावत्-कल्पानीति पूर्वोक्तेनान्वयः स्यात्। 'निवर्तन-लक्षणन्तु मत्स्य-पुराणोक्तम्—

"सप्त-हस्तेन दण्डेन त्रिंशद्दण्डा निवर्तनम्।
त्रि-भाग-हीनं गोचर्म-मानमाह प्रजापतिः[1] ॥"

देव-ब्राह्मणौ वार-त्रयं संपूज्य घों अद्याक्षय-तृतीयायां गङ्गा-तीरे दातव्य-भूमि-परमाणु-सम-संख्य-कल्पायुतावच्छिन्न-सोमेन्द्र- ब्रह्म-विष्णु -शिव- लोकाधिकरणक- श्रीमत्- स्वकर्तृक- भोगोपभोग-तदुत्तर रूप-सम्पन्न-सर्व-रोग-विवर्जित- सर्व- सम्पत्- समृद्ध-भेरी-शङ्खादि-निर्घोष-गीत-वादित्र-निस्वन-मागध-स्तुति-चारण-सूत-प्रति-बोध-वत्-[2]सप्त-द्वीप-पतित्व-भवन-सर्व-धर्म-परायण-स्व-कर्तृक-सर्व-सौख्यावाप्ति-नरकस्थ-सर्व-पितृ-स्वर्ग-नयन- स्वर्गस्थ- सर्व-पितृ-मोक्ष-प्रापणानन्तर-महाद्युति[3]-स्वकर्तृकाविद्याच्छेद-पर-वैराग्य-पर-ब्रह्माधिगमन-काम इमां निवर्तन-द्वय-परिमितां भूमिं प्रियदत्तां विष्णु-दैवताम् इत्यादि। दक्षिणा भूमि-प्रदक्षिणान्ताम्। 'प्रियदत्तामि'ति, स्कान्दे—"नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम्। दाने वाप्यथवादाने नामास्याः परमं प्रियम्[4] ॥"

---

1. Hemādri, CaturVC., दान-खण्ड, p. 505, ll. 14-15.
2. A. प्रतिरोध-वत। 3. C. महद्युति।
4. S'uddhiT., chap. दान, p. 409, ll. 9-10, said to be taken from the महाभारत। A. दानं वाप्यथवा दानं...।

दान-काले यत् "प्रियदत्ता नामाख्याः परमं प्रियमि"ति कीर्तितं ततः प्रियदत्तामित्युदीर्य्य दातव्यमिति तात्पर्य्यमित्यर्थः।

परिमाण-संख्यामाह आदित्य-पुराणे—

"गवां शतं वृषश्चैको यत्र तिष्ठत्ययन्त्रितः। तद्धि गोचर्म-मात्रन्तु प्राहुर्वेदविदो जनाः[1] ॥" तथा बृहद्वशिष्ठः—"दश-हस्तेन वंशेन दश-वंशान् समन्ततः। पञ्च वाऽभ्यधिकं दद्यादेतद् गोचर्म उच्यते[2] ॥"

'पञ्च वाऽभ्यधिकमि'त्येकस्मिन् पार्श्वे पञ्च-वंशाधिकं वा।

नन्दी-पुराणे—"एकोऽप्यशेयाद् यदुत्पन्नं नरः सांवत्सरं फलम्। गोचर्म-मात्रा सा क्षौणी स्तोका वा यदि वा बहुः ॥" शैवे—"गोचर्म-मात्रां पृथिवीं गङ्गा-तीरे ददाति यः। अक्षयायां तृतीयायां सोऽत्र क्षिति-पतिर्भवेत् ॥"

अक्षयाख्य-तृतीयायां क्षिति-पतित्व-भवन-कामनया गङ्गा-तीरे इमां[3] गोचर्म-मात्रां भूमिं प्रियदत्तां यथानाम-गोत्रायेत्यादि। दक्षिणा-भूमि प्रदक्षिणान्तम्।

तथा भविष्ये—"ग्रामं गङ्गा-तटे यो वै विप्रेभ्यः संप्रयच्छति। ब्रह्मा-विष्णु-शिवेभ्यश्च दुर्गायै भास्कराय च ॥ सर्व-दानेषु यत् पुण्यं सर्व-यज्ञेषु यत् फलम्। सर्व-तीर्थेषु यत् पुण्यं सर्व-व्रत-तपःसु च ॥ सहस्र-गुणितं तत्र फलं स्याद् ग्राम-दानतः ॥

---

1. Cp. BhavP. मध्यम-पर्व, chap. 2, v. 25, p. 239 (a), last line, तद्गोचर्मेति विख्यातं दत्तं सर्वाघ-नाशनम्।

2. A. v. r. तस्मात्ततो गोचर्म उच्यते। Cp. DanaKK., p. 40; also CaturVC., p. 505, "दश-हस्तेन दण्डेन दश-हस्तात् समन्ततः। पञ्च चाभ्यधिकां दद्यादेतद् गोचर्म कथ्यते"।—

3. इमां not found in C.

सूर्य-कोटि-प्रतीकाशैर्दिव्य-स्त्री-कोटि-संयुतैः। दिव्य-रत्नमयै-श्चित्रैर्विमानैर्वैष्णवे पुरे॥ क्रीडते सर्व-सम्पन्नः शाङ्करे च[1] पुरे तथा। स्वकीय-पितृभिः सार्धं क्रीडते कालमक्षयम्॥ यावत्तद्-ग्राम-भूमेर्वै परमाणुः स्वसंख्यया। भोगान् भुक्त्वा तथा लोके जायते योगिनां कुले॥ अणिमादि-गुणैर्युक्तः स्वयं भोगी भवत्यपि। देहान्ते निर्मले नित्ये परे ब्रह्मणि लीयते॥"

देव ब्राह्मणौ संपूज्य अद्याक्षय-तृतीयायां गङ्गा-तीरे च सर्व-दान-सर्व-यज्ञ-सर्व-तीर्थ-सर्व-व्रत-तपोजन्य-फल-सहस्र-गुण-फल-प्राप्ति-सूर्य-कोटि-प्रतीकाश-दिव्य-स्त्री-कोटि-संयुत-दिव्य-रत्न-मय-चित्र-बहु-विमान-करणकाक्षय-काल-व्यापि-स्व-पितृ-सहित-स्व-क्रीडन-दातव्य-ग्राम-भू-परमाणु-सम-संख्य-तल्लोकाधिकरणक-योगि-कुल-जन्माणिमादि-गुण-युक्त-भोगित्व-भवन-देहान्त-कालिक-निर्मल-नित्य-पर-ब्रह्म-लय-काम इदं ग्रामं विष्णुदैवतमित्यादि। दक्षिणा प्रदक्षिणान्तम्।

## सुवर्ण-दानम्[2]।

भविष्ये[3]—"तथा तस्यां तृतीयायां वेदविद्ब्राह्मणाय वै। माष-षोडश-मात्रं वा सुवर्णं यः प्रयच्छति॥ स हेम-रत्न-खचिते विमाने सर्वगे शुभे। सर्व-पाप-विनिर्मुक्तः सर्व-भूषण-भूषितः॥ सर्वैश्वर्य-समृद्धश्च सर्व-लोकेषु सर्वदा। ब्रह्माण्डान्तर-संस्थेषु बहु[4]-भोगान् पृथग्विधान्॥ भुक्त्वा स्व-पितृभिर्यावदाहूत-संप्लवम्। ततो रुद्रस्य सायुज्यं प्राप्नोत्येव न संशयः।"

1. A. शङ्करेश।

2. DānaKK., p. 51f.; DānaC., p. 18; CaturVC., p. 586f.

3. भविष्ये not found in C.

4. C. रत्न।

देव-ब्राह्मणौ संपूज्य श्वो' अद्यामय-तृतीयायां गङ्गा-तीरे सर्व-लोकाधिकरणक-हेम-रत्न-खचित-सर्वग-शुभ-विमानाधिकरणक-सर्व-पाप-विनिर्मुक्त-सर्व-भूषण-भूषित-सर्वैश्वर्य-समृद्ध-स्वकीय-पितृ-सहित-यावदाभूत-संप्लव-स्वर्गविध-बहु-भोगोपभोग-तदुत्तर-रुद्र-सायुज्य-प्राप्ति[1]-काम इमं षोडश-माष-परिमितं सुवर्णमग्नि-दैवतमित्यादि। दक्षिणा स्वर्गान्तम्।

यदन्यद्विहितं कर्म गङ्गा-तीरे क्रियते तस्य फलं कोटि-कोटि-गुणम्। "गङ्गा-तीरे कृतं यत्तु तत्[2] कोटि-गुणितं भवेदि"ति विधानात्। तथा च ब्राह्मे—"सर्व-दानानि नियमा यमाश्चैव तपांसि च। यज्ञो दानं तथा जप्यं श्राद्धश्च सुर-पूजनम्। गङ्गायान्तु कृतं सर्वं कोटि-कोटि-गुणं भवेत्[3] ॥"

अथ व्रत-फलादि।

तत्र भविष्य-पुराणे—स्कन्द उवाच—"अष्ट-मूर्ति-धरां गङ्गां दिव्य-[4]रूपां निरीक्षितुम्। साक्षाद्देवास्तु मर्त्यानां तदुपायं व्रतं वद ॥" भगवानुवाच—"शालि-तण्डुल-प्रस्थे द्वे[5] द्वि-प्रस्थ-पयसा तथा। पायसं पाचयित्वा तु मधुना घृत-संयुतम्। प्रत्येकं पल-मात्रन्तु तत्र निक्षिप्य भक्तितः। तत् पायसमपूपांश्च मोदका-न्मण्डलानि च। तथा गुञ्जार्ध-मात्रन्तु सुवर्णं रूप्यमेव च। चन्दनागुरु-कर्पूर-कुङ्कुमानि च गुग्गुलुम्। विल्व-पत्राणि दूर्वाश्च रोचना सित-चन्दनम्। नीलोत्पलस्य पुष्पाणि पुष्पाभावे दलान्यपि। यथाशक्त्या महाभक्त्या गङ्गायां यो विनिक्षिपेत्।

---

1. A. प्राप्ति omited। 2. तत् Not Found in C.

3-3. PrayT. chap. नन्दा-स्नान p. 88 line 15. v. r.... यज्ञोदानं तपो जप्यं...स्कान्दे। 4. A. नित्य। 5. C. प्रस्थेन।

पौर्णमास्यां मासि मासि दर्शे च प्रहर-द्वये। चदयाऽनेन मन्त्रेण यावत् संवत्सरं तथा। ॐ गङ्गायै विष्णु-मुख्यायै नारायण्यै शिवायै च नमो नमः॥ इति मन्त्रेण सततं[1] शतमष्टोत्तरं जपेत्। गङ्गा-जलान्तः स्थित्वा च तन्मनास्ताद्ग-संशयः। हविष्याशी मिता-हारी[2] यामिनीषु दिनेषु च॥ संवत्सरान्ते तस्यैषा गङ्गा दिव्य-वपुर्धरा। दिव्य-माल्याम्बर-धरा दिव्य-रत्न-विभूषिता। प्रत्यक्ष-रूपा पुरतस्तिष्ठत्येव वरप्रदा। एवं प्रत्यक्षतः साक्षाद् गङ्गां दिव्य-वपुर्धराम्॥ दृष्ट्वा स्व-चक्षुषा मर्त्यो वर-दान-समुद्यताम्। यान् यान् कामयते मर्त्यस्तांस्तान् कामानवाप्नुयात्[3]। निष्कामस्तु लभेन्मोक्षं न तेनैव च जन्मना॥"

'मण्डलं' मण्डलाकारः शष्कुली-विशेषः पूपादिः। 'चन्दनं' रक्त-चन्दनम्। श्वेत-चन्दनस्य पृथगुपादानात्। कस्यामपि पूर्णिमायां विष्यादि-दोष-रहितायां कृत-नित्य-क्रियः ॐ भगवन् सूर्य, भगवत्यो देवताः[4], अद्यादि-वर्ष[5]-सर्व-पञ्चदशी-प्रहर-द्वय-कालीन-गङ्गाधिकरणक-पायसादि-प्रक्षेप-रूप[6]-व्रतम् अहम् आचरिष्यामीति निवेद्य कुशान् आदाय गङ्गा-साक्षात्-कार-कामोऽद्यादि वर्षं प्रतिपौर्णमासि प्रतिदर्शं प्रहर-द्वये गङ्गायां मधु-खण्ड-घृत-सहित-पायस-पूप-मोदक-मण्डल-शुक्लार्ध-मित-सुवर्ण-रूप्य-चन्दनागुरु-कर्पूर-कुङ्कुम-गुग्गुलु-बहु-विल्वपत्र-बहु-दूर्वा-रोचना[7]-सित-चन्दन-नीलोत्पल-तत्-पत्रान्यतर-प्रक्षेपमहं करिष्ये। इति संकल्पयेत्।

---

1. Not found in C. 2. C. मिताहारी।
3. A. कामांस्तांस्तानवाप्नुयात्। 4. Omitted in A.
5. A. वर्षं। 6. A. प्रक्षेपादि-रूप। 7. A. रोचनादि।

ततः शालि-तण्डुलेन प्रस्थ-मितेन प्रस्थ-द्वय-मित-गव्य-दुग्ध-साधिते[1] पायसे निष्पन्ने पल-मितं मधु, पल-मितं खण्डं, पल-मितं गव्य-घृतञ्च प्रक्षिप्य तत्र पायसमपूप-त्रयं मण्डल-त्रयं,[2] [3]रत्तिकार्धं हिरण्यं[3] रत्तिकार्धं रजतं चन्दनम् अगुरुं कर्पूरं कुङ्कुमं गुग्गुलुं बिल्व-पत्राणि दूर्वां गोरोचनां सित-चन्दनं नीलोत्पलं तत्-पत्रं वा सर्वमेकस्मिन् पात्रे निधाय तच्च दक्षिण-हस्तेनादाय कृत-नित्य-क्रियो दिवस-मध्ये प्राङ्मुख उपविष्टः पवित्र-पाणिराचान्तस्तन्मनाः श्रद्धया भक्त्या च "ओं गङ्गायै विष्णु-मुख्यायै नारायण्यै शिवायै च नमो नमः" इति मन्त्रेण एकदैव गङ्गा-प्रवाहे निक्षिपेत्। तत इममेव मन्त्रं गङ्गा-जल-प्रविष्टो गङ्गां ध्यायन्नष्टोत्तर-शतं जपेत्। ततस्तद्दिने संयतो मित-हविष्याशी च भवेत्। एवं प्रतिपक्षदशमीषु वर्ष-पूर्ति-पर्य्यन्तं भवेत्। पूर्त्ति-दिने चामावस्यामके ब्राह्मण-त्रयं भोजयेत्।

तथा, "शृणुध्वं भक्तितो यूयं वक्ष्यामि मुनि-पुङ्गवाः। सर्व-व्रतानां राजानं धर्म-व्रतमनुत्तमम्॥ वृष-ध्वजेन कथितं शिवेन दयया पुरा। प्रोक्ता देव्या च पृष्टेन गङ्गा-तीर-निवासिना॥ [4]देवैस्तु भुक्तं पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा। अपराह्णे च पितृभिः शर्व्वर्यां गुह्यकादिभिः॥ सर्व-वेला-मतिक्रम्य नक्तं भोजनमुत्तमम्। उपवासात् परं भैक्ष्यं भैक्षात् परमयाचितम्[4]॥ अयाचितात् परं नक्तं तस्मान्नक्तेन

1. A. साधितेन। 2. C. मोदक-द्वयं।

3-3. Not found in C.

4-4. BhavP., p. 469, chap. 97, vv. 5-6, v. r. देवैश्च... मध्याह्ने मुनिभिस्तथा...सन्ध्यायां गुह्यकादिभिः...सर्व-लोकानतिक्रम्य।

वर्जयेत्[1] । हविष्य-भोजनं स्नानं सत्यमाहार-लाघवम्[2] । अग्नि-कार्यमधःशय्यां नक्तभोजी समाचरेत्[3] ॥"

'लाघवम्' इति आहारस्यावदर्धोदर-पूरणः "अर्धं भक्तेन पूरयेदि"त्यभिधानात्। तस्याप्यर्धत्वं लाघवम्, "समं स्यादश्रुतत्वादि"ति न्यायात्। 'अग्नि-कार्यं' होमः। स च घृतेन महाव्याहृति-मन्त्रेण प्रजापति-देवताकः। "आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः॥" इति वचनात्। संख्या चाष्टोत्तर-शतमष्टाविंशतिरष्टौ वा। "होमो ग्रहादि-पूजानां शतमष्टाधिकं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते॥" इति वचनात्[4]।

"गङ्गा-तीरे माघ-मासे यः कुर्यान्नक्त-भोजनम्। शिवायतन-पार्श्वे तु कृशरं घृत-संयुतम्॥ नैवेद्यञ्च निवेद्यैव कृशरान्नं[5] शिवस्य तु। काष्ठ-मौनेन[6] भुञ्जानो जिह्वा-लौल्यं विवर्जयेत्॥ पलाश-पत्रे भुञ्जानः शिवं स्पृष्ट्वा जितेन्द्रियः। धर्मराजस्य देव्याश्च पृथक् पिण्डं प्रकल्पयेत्॥ सोपवासश्चतुर्दश्यां भवेदुभय-पक्षयोः। पौर्णमास्यान्तु गन्धैश्च गङ्गायाः सलिलैस्तथा॥ शिवं संस्नाप्य[7] पयसा मधुना च स्व-भक्तितः[8]। तथैव[9] हेम-

1. C. तस्माच्च विवर्जयेत् (?) ; BhavP., p. 450, v. 8, नक्तेन भोजयेत्।

2. C. भोजनम् (?)। The line "हविष्य-भोजनं...लाघवम्" is found in the BhavP. after "सर्व-वेलामतिक्रम्य...मुत्तमम्"।

3. Ekādas'īT., chap. नक्त-व्रत, BhavP., op. cit., p. 197, अग्नि-कार्यो अधःशय्यो नक्त-भोजी सदा भवेत् ॥

4. Not found in C. 5. A. कृशरान्नं। 6. C. मौलेन। 7. A. संस्नाप्य। 8. C. वापि भक्तितः। 9. A. यथैव।

पञ्च लिङ्ग-मूर्ध्नि विनिक्षिपेत् । ततो दद्यात् स्व-शक्त्यैव शिवाय घृत-कम्बलम् । एकाढकं कृष्ण-तिलं शिव-लिङ्गोपरि क्षिपेत् ॥ नीलोत्पलैश्च सर्वेशं पूजयेत् पङ्कजैरपि ॥"

"अलाभे कारयेद्धेम्ना[1] माष-मात्रेण[2] चोत्पलम् ॥ पायसं चात्र मधुना घृत-युक्तन्तु गुग्गुलम् । [3]घृत-दीपं तथा चैव चन्दनाद्यं विलेपनम् ॥ दद्यात् स्व-शक्तितो भक्त्या यथापत्र-फलानि च । कृष्ण-गो-मिथुनञ्चैव स्वरूपञ्च निवेदयेत् ॥ भोजयेद्ब्राह्मणा-नष्टौ मासान्ते तु स-दक्षिणान्[3] । वर्जयेन्मधु मांसञ्च तं मासं ब्रह्मचर्यवान् ॥ एवं कृत्वा यथोद्दिष्टमेक-वारमिदं व्रतम् । यम-नियम-सम्पन्नः श्रद्धा-भक्ति-समन्वितः ॥ इह भोगानवाप्नोति प्रेत्य चानुत्तमां गतिम् । इन्द्रनील-प्रतीकाशैर्विमानैः शिखि-संयुतैः ॥ दिव्य-रत्नमयैश्चैव दिव्य-भोग-समन्वितैः[4] । गत्वा शिव-पुरं रम्यं सर्व-स्व-कुल-संयुतः ॥ सुहृद्भिर्बहुभिश्चैव विविधान-प्यभीप्सितान् ॥ भुक्त्वा भोगानशेषांस्तु यावदाहूत-संप्लवम् । ततो भवति धर्मात्मा जम्बु-द्वीप-पतिस्तथा ॥ तत्र भुङ्क्ते समस्तांश्च भोगान् विगत-कण्टकः । स्व-रूपः सुभगश्चैव[5] न-तिरस्कृत-शासनः । सर्व-रोग-विनिर्मुक्तः सोऽप्येतत्-फलभाग् भवेत् ॥"

प्रथम-दिने प्रातः श्री भविष्य-पुराणोक्त-विधिना अद्यादि मासं नक्त-व्रतमहमाचरिष्यामीति निवेद्य कुशादिकमादाय श्री ऐहिक-बहु[6]-भोगोपभोग-प्रयाणानन्तरानुत्तम-गति-प्राप्तीन्द्रनील-प्रतीकाश-शिखि-संयुत-दिव्य-रत्नमय-दिव्य-भोग-समन्वित-बहु-विमान-करणक-रम्य[7]-शिव-पुर-गमन-तदधिकरणक-सर्व-स्व-कुल-

1. C. कारयेत् प्रेम्णा । 2. A. माष-मानेन ।
3-3. Not found in C. 4. A. समन्वितः ।
5. A. शुभगश्चैव । 6. Omitted in C. 7. A. करणारम्य ।

बहु-सुहृत्-सहित-यावदाभूत-संप्लव-विविधाभीप्सित-बहु-भोगोप-भोग-कामोऽद्यादि मासं[1] भविष्य-पुराण-रीत्या गङ्गा-तीरे[2] शिवायतन-पार्श्वे नक्त-व्रतमहं करिष्ये। इति संकल्प्य प्रत्यहं पूर्वाह्णे शिव-पूजां तिल-कुश-सहितैः श्वेत-धान्यस्य तण्डुलैः साधित-कृसर-रूप-नैवेद्य-दान-सहितां कुर्यात्। [3]यथोक्त-स्नानञ्च कुर्यात्[3]। होमश्चायं शिव-देवताको न तु प्रजापति-देवताकः। व्रत-पर्यालोचनेन शिव-देवतात्वं स्यात्र तद्वर्जदिग्यादिं (?) तु केचित्॥ ततः सायं-सन्ध्योत्तरं कृसरान्नं केवलं पलाश-पत्रे कृत्वा शिवं स्पृष्ट्वा धर्मराजाय नमः दुर्गायै नमः इति बलि-द्वयं दत्त्वा हूंकारादीनि[4]-कृत्वा भुञ्जीत। ततो रात्रौ भूमि-स्थितायां शय्यायां शयीत। चतुर्दश्यामुपवास एव कर्तव्यः। पौर्णमास्यान्तु गन्धैर्गङ्गा-जलैर्दुग्धेन मधुना चाष्टोत्तर-शत-पल-न्यूनेनापि यथाशक्त्युपहृतेन शिवं स्नापयित्वा हेम पट्टं शिव-मूर्ध्नि दत्त्वा तत एकाढक-मितान् कृष्ण-तिलान् शिव-लिङ्गोपरि दत्त्वा ततो नीलोत्पलैस्तदभावे एक-माष-मित-हेम-घटित-नीलोत्पलैः शिवं संपूज्य ततः समस्त-पायसं नैवेद्यं तथा स-घृत-गुग्गुलु-धूपं तथा घृत-दीपं तथा चन्दनादि-विलेपं तथा पत्र-फल-मूलादिकं स्वरूपं कृष्ण-गो-मिथुनञ्च निवेद्य ततो ब्राह्मणानष्टौ भोजयित्वा, किञ्चिद्दक्षिणां दद्यात्। इमञ्च मासं [5]मधु मांसं मैथुनं वर्जयेत्। यम-नियम-सम्पन्नः श्रद्धा[5] भक्ति-समन्वितो भवेत्।

तथा भविष्ये—"वैशाखे शुक्ल-पक्षे च चतुर्दश्यां समाहितः।

1. A. मार्च।
2. N t found in C.
3-3. Not found in C.
4. C. चों कारादीनि।
5-5. C. मधु-मांस-मैथुन-वर्जको नियम-श्रद्धा।

शाल्यन्नं क्षीर-संयुक्तं यः कुर्य्यान्नक्त-भोजनम् ॥ शिवं संपूज्य पुष्पाद्यैर्भोज्यन्तु सन्निवेद्य च । काष्ठ-मौनेन[1] भुञ्जानो वट-काष्ठेन वै ततः ॥ मौनेन प्रयतो भुक्त्वा कुर्य्याद्वै दन्त-धावनम् । शिव-लिङ्ग-समीपे तु गङ्गा-तीरे निशि स्वपेत्[2] ॥ पौर्णमास्यां प्रभाते तु गङ्गायां विधिना तथा । स्नात्वोपवासं संकल्प्य कुर्य्याज्जागरणं निशि ॥ लिङ्गं घृतेन संस्नाप्य[3] पुष्प-गन्धादिभि-स्तथा । नैवेद्य-धूप-दीपैश्च[4] संपूज्य वृषभं शुभम् ॥ सु-श्वेत-वस्त्र-पुष्पाद्यैर्गन्धैर्विद्रैश्चन्दनैस्तथा । 'हारिद्र'' सुवर्णम् । अलङ्कृत्य विधानेन शिवाय विनिवेदयेत् ॥ ब्राह्मणांश्च यथाशक्ति पायसेन तु भोजयेत् । एवं सम्यच्च यो भक्त्या करोति श्रद्धयाऽन्वितः ॥ लभते देव पादोनं युगानां द्वि-सहस्रकम् । ततः कृत्वा तु नियमात् तत् पुण्यं तदसंशयम् ॥ हंस-कुन्द-प्रभा-युक्तै-र्विमानैश्चन्द्र-सन्निभैः । सुश्वेत वृष-संयुक्तैर्मुक्ता-जाल-विभूषितैः ॥ स्वकीय-पितृभिः सार्धं प्रयातीश्वर-मन्दिरम् । नीलोत्पल-सुगन्धाभिः स्वरूपाभिः समन्ततः[5] ॥ कान्ताभिर्दिव्य-रूपाभि-र्भुक्त्वा भोगानशेषतः । अनन्त-कालमैश्वर्य-युक्तो भूत्वा तथा दिवि[6] ॥ जायते स महीपालो रूप-कीर्त्ति-[7]समन्वितः ॥ एकच्छत्रं च च[8] महीं पालयित्वाऽज्ञया सह । अन्ते वैराग्य-सम्पन्नो गङ्गां स भजते पुनः ॥ स तथा श्रद्धया युक्तो गङ्गायां मरणं लभेत् । तथा तत्र स्मृतिं लब्ध्वा मोक्षमाप्नोति स ध्रुवम् ॥"

वैशाख-शुक्ल-चतुर्दश्यां समाहितः पूर्वाह्णे[9] पञ्चोपचारैः शिवं संपूज्य भोज्यञ्च शिवाय निवेद्य नक्तं शाल्योदनं गव्य-दुग्ध-सहितं

1. A. मौनेन । 2. C. स्वपेत् । 3. A. संस्नाप्य ।
4. A. निवेद्य धूप-दीपौ च । 5. C. समन्वितः ।
6. C. ततो भुवि । 7. A. कीर्त्ति-रूप । 8. A. स ।
9. Omitted in C.

महामौनेन भुक्त्वा वट-काष्ठेन मन्त्र-मौनेन दन्तान् संशोध्य गङ्गा-तीरे शिव-लिङ्ग-समीपे निशि स्वपेत्। ततः प्रभाते गङ्गायां सविधि स्नात्वा ओं भगवन् सूर्य, भगवत्यो देवताः, भविष्य-पुराणोक्त-विधिनोपवासरूप-व्रतमहमाचरिष्यामि इति निवेद्य कुशादिकमादाय ओं अद्य पादोन-युग-सहस्र-द्वय-पर्यन्त-तपः-करण-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामः हंस-कुन्द-प्रभा-युक्त-चन्द्र-समन्वित-ध्वज-संयुक्त-मुक्ता-जाल-विभूषित-बहु-विमान-करणक-स्व-पितृ-गण-सहितेश्वर-मन्दिर-गमन-नीलोत्पल-सुगन्ध-दिव्य-रूप-बहु-कान्ता-सहितैः स्वयं-युक्त-स्व-कार्त-कान्त-काल-बहु-भोगोप-भोग-तदुत्तर-कीर्ति-रूप-समन्वितैः कच्छवाहा-सहित-महीपालत्व-भवनान्त-कालिक-वैराग्य-सम्पन्न-स्वीय-गङ्गा-लाभ-श्रद्धा-युक्त-गङ्गा-मरण-प्राप्ति-जाति-स्मरण-पूर्वक-मोक्ष-प्राप्ति-कामो भविष्य-पुराणोक्त-विधिनोपवासमहं करिष्ये। इति संकल्प्य तद्दिने उपवासं रात्रौ च जागरणं कुर्यात्। ततः प्रभाते षष्टोत्तर-शत-पल-मित-गव्य-घृतेन शिव-लिङ्गं स्नापयित्वा पञ्चोपचारैः संपूज्य श्वेत-वस्त्र-पुष्प-चन्दन-सुवर्णालङ्कृतं द्रव्यं, शिव-द्वयौ संपूज्य शिवाय "ओं अद्य इमं द्रव्यं श्वेत-पुष्प-चन्दन-हारिद्रालङ्कृतं[1] शिवायाहं ददे" इति वाक्येन दद्यात्। तथा यथाशक्ति ब्राह्मणान् पायसं[2] भोजयेदिति।

"ज्यैष्ठे मासि सिते पक्षे दशम्यां हस्त-संयुते। गङ्गा-तीरे तु पुरुषो नारी वा भक्ति-भावतः॥ निशायां जागरं कृत्वा गङ्गां दश-विधैस्तथा। पुष्पैर्गन्धैश्च नैवेद्यैः फलैश्च दश-संख्यया॥ तथैव दीपैस्ताम्बूलैः पूजयेच्छ्रद्धयाऽन्वितः। स्नात्वा भक्त्या तु

1. C. वस्त्र-हारिद्र-चन्दनालङ्कृतं 2. Not found in C.

गङ्गायां[1] दशकृत्वो विधानतः ॥ दश-प्रसृति-कृष्णांश्च तिलान् सर्पिश्च वै जले । शक्तु-पिण्डान् गुड-पिण्डान् दद्याच्च दश-संख्यया । ततो गङ्गा-तटे रम्ये हेम्ना रूप्येण वा तथा ॥ गङ्गायाः प्रतिमां कृत्वा वक्ष्यमाण-स्वरूपिणीम् । पद्म-स्वस्तिक-चिह्नस्य संस्थितस्य तथोपरि ॥ वस्त्र-स्रग्दामकान्तस्य पूर्ण-कुम्भस्य चोपरि । संस्थाप्य पूजयेद्देवीं तदभावे मृदापि वा ॥ अथ तत्राप्यशक्तश्च लिखेत् पिष्टेन वै भुवि ।" उक्त-ध्यान-स्वरूपं ध्यायेत् ।

"वक्ष्यमाणेन मन्त्रेण कुर्यात् पूजामशेषतः । पञ्चामृतेन च स्नानमर्चायान्तु[2] विशिष्यते ॥ प्रतिमार्थं स्थण्डिले तु गोमयेनोप-लेपयेत् । नारायणं महेशञ्च ब्रह्माणं भास्करं तथा ॥ भगीरथञ्च नृपतिं हिमवन्तं नगेश्वरम् । पुष्प-गन्धादिभिश्चैव यथाशक्ति प्रपूजयेत् ॥ दश प्रस्थांस्तिलान् दद्याद् दश-विप्रेभ्य एव च । दश प्रस्थान् यवान् दद्याद् दश-गव्यै गवां पतिः ।" 'प्रस्थः' षोडश पलानीति कल्पतरुः ।

"मत्स्य-कच्छप-मण्डूक-मकरादि-जलेचरान् । कारयित्वा यथाशक्ति स्वर्णेन रजतेन वा । तदभावे पिष्टमयानभ्यर्च्य कुङ्कुमादिभिः[3] । गङ्गायां प्रक्षिपेदाद्यं दीपांश्चैव प्रवाहिषु[4] ॥ [ यथा (?) रथ ]-यात्रां दिने तस्मिन् विभवे सति कारयेत् ॥ [ यथा (?) रथा ]-रूढ-प्रतिकृति[5]र्गङ्गायास्तूत्तरा-मुखम् ॥ भ्रमन्त्या दर्शनं लोके दुर्लभं पाप-कर्मणाम् । दुर्गायास्तु यथा यात्रा तथैवात्रापि कारयेत् ॥ एवं कृत्वा विधानेन वित्त-शाठ्य-विवर्जितः । दश-पापैर्वक्ष्यमाणैः सद्य एव विमुच्यते ॥"

---

1. A. गाङ्गयां । 2. C. स्नानं शर्च्चयान्तु ।
3. C. तदलाभेन पिष्टेन संपूज्य कुसुमादिभिः ।
4. C. प्रपादिषु । 5. C. प्रतिकृतो ।

"अदत्तानामुपादानमि"त्यादि। "एतैर्दश-विधैः पापैः कोटि-जन्म-समुद्भवैः। मुच्यते नात्र सन्देहो ब्रह्मणो वचनं यथा॥ दश-त्रिंशच्छतान् पूर्वान् पितॄनेव तथापरान्। उद्धरत्येव संसारान्मन्त्रेणानेन पूजयेत्॥ ओं नमो नारायण्यै दशहरायै गङ्गायै नमो नमः। इति मन्त्रेण यो मर्त्त्यो दिने तस्मिन् दिवानिशम्। जपेत् पञ्च-सहस्राणि दश-धर्म-फलं लभेत्॥ उद्धरेद्दश-पूर्वांश्च कुलश्चैव भवार्णवात्। वक्ष्यमाणमिदं स्तोत्रं विधिना[1] प्रतिगृह्य च॥ गङ्गायै तद्दिने[2] जप्यं विस्तात्-[3] पूजां प्रवर्त्तयेत्॥"

अथ गङ्गा-स्तुतिः[4]।

"ओं॥ नमः शिवायैः गङ्गायै शिवदायै[5] नमोऽस्तु ते[6]। नमोऽस्तु विष्णु-रूपिण्यै गङ्गायै ते नमो नमः[7]॥ सर्व-देव-स्वरूपिण्यै नमो भेषज-मूर्त्तये। सर्वस्य[8] सर्व-व्याधीनां भिषक्-श्रेष्ठे नमोऽस्तु ते॥ स्थाणु-जङ्गम-सम्भूत-विषहन्त्रि नमोऽस्तु ते[9]॥ संसार-विष-नाशिन्यै जीवनायै नमो नमः[10]। ताप-त्रितय-हन्त्र्यै च[11] प्राणेश्यै ते नमो नमः॥ शान्ति-सन्तान-कारिण्यै नमस्ते शुद्ध-मूर्त्तये।

1. C. विधिवत्। 2. C. तु दिने।

3. A. वि ततः।

4. बृहत्-स्तोत्र-रत्नाकर, p. 780, chap. "गङ्गादि-तीर्थ-स्तोत्राणि", स्कन्द-पुराण-काशीखण्डीय-दशहरा-स्तोत्रम्।

5. A. C. शिवजायै (?)। 6. Op cit. नमो नमः।

7. After this line found: नमस्ते रुद्र-रूपिण्यै शाङ्कर्यै ते नमो नमः। 8. सर्वत्र।

9. C. भक्ति-मुक्ति प्रदायिन्यै भवायै ते नमो नमः॥

10. नमोऽस्तु ते। 11. संहर्त्र्यै।

सर्व-संशुद्धिकारिण्यै नमः पापारि-मूर्तये ॥ भुक्ति-मुक्तिप्रदायिन्यै भद्रायै ते[1] नमो नमः। भोगोपभोगदायिन्यै भोगवत्यै नमोऽस्तु ते ॥ मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः। नमस्त्रैलोक्य-भूषायै त्रिदशायै[2] नमो नमः ॥ नमस्त्रि-शुक्ल[3]संस्थायै क्षमावत्यै[4] नमो नमः। त्रिदशासन-[5] संस्थायै तेजोवत्यै नमो नमः ॥ मन्दायै[6] लिङ्ग-धारिण्यै नारायण्यै नमो नमः[7]। नमस्ते विश्व-मित्रायै[8] रेवत्यै ते नमो नमः ॥ बृहत्यै ते नमोऽस्तु लोकधात्र्यै नमोऽस्तु ते। नमस्ते विश्व-मुख्यायै[9] नन्दिन्यै ते नमो नमः ॥ पृथ्व्यै शिवामृतायै च विजयायै[10] नमो नमः[11] ॥ पाप-जाल-निकृन्तायै[12] अभिवायै नमो नमः[13] ॥ शान्तायै ते प्रतिष्ठायै[14] वरदायै नमो नमः। उस्रायै सुख-जग्धायै सञ्जीविन्यै नमो नमः[15] ॥ ब्रह्मिष्ठायै[16] ब्रह्मदायै दुरितघ्न्यै नमो नमः। प्रणतार्ति-प्रभञ्जिन्यै जगन्मात्रे नमो नमः[17] ॥ [18]निस्तुषायै दुर्ग-हन्त्र्यै दुर्गायै ते नमो नमः[18] ॥ सर्वापत्-प्रतिपक्षायै मङ्गलायै नमो नमः। परापर-परे तुभ्यं नमस्ते मोक्षदे

1. भद्रदायै। 2. त्रिपथायै।
3. C. and Bṛhat-strotra-ratna-hāa. शुक्र।
4. चमावत्यै। 5. त्रि-हुताशन। 6. नन्दायै।
7. सुधा-धारात्मने नमः। 8. विश्व-मुख्यायै।
9. विश्व-मित्रायै। 10. स-रजायै।
11. After this line "परापर-शताढ्यायै तारायै ते नमो नमः।"
12. निकृन्तिन्यै। 13. नमोऽस्तु ते।
14. ...च वरिष्ठायै।
15. सुख-जग्ध्यै च संजीविन्यै नमोऽस्तु ते।
16. अभिष्ठायै। 17. नमोऽस्तु ते।
18-18. Not traced in बृहत्-स्तोत्र-रत्न हार।

सदा[1] ॥ गङ्गा ममाग्रतो भूयाद् गङ्गा मे पार्श्वयोस्तथा[2] । [3]गङ्गा मे सर्वतो भूयात् त्वयि गङ्गेऽस्तु मे स्थितिः[3] ॥ आदौ त्वमन्ते मध्ये च सर्वं त्वं गाङ्गते शिवे[4] । त्वमेव मूल-प्रकृति[5]स्त्वं हि नारायणः प्रभुः[5] ॥ गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे । [6]इतीदं पठति स्तोत्रं नित्यं भक्ति-परो हि यः । शृणोति श्रद्धया यश्च काय-वाक्-चित्त-सम्भवैः । दशधा संस्थितैर्दोषैः सर्वैरेव विमुच्यते ॥ रोगस्थो मुच्यते रोगादापद्भ्यश्च विमुच्यते । द्विषद्भ्यो बन्धनाच्चैव भयं भ्यश्च विमुच्यते[6] ॥ सर्वान् कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते[7] ॥ [8]इति स्तवं गृहे यस्तु लिखित्वाऽपि

1. This line is not traced in बृहत्-स्तोत्र रत्न-हार and C.

2. This line is found preceded by two veses in the BṛhatSRH., "शरणागत-दीनार्त-परित्राण-परायणे । सर्वस्यार्ति-हरे देवि नारायणि नमोऽस्तु ते । निर्लेपायै दुर्ग-हन्त्र्यै दक्षायै ते नमो नमः । परापर-परायै च गङ्गे निर्वाण-दायिनि ॥"

3-3. BṛhatSRH., "गङ्गे ममाग्रतो भूया गङ्गे मे तिष्ठ पृष्ठतः । गङ्गे मे पार्श्वयोरेधि गङ्गे त्वय्यस्तु मे स्थितिः ।" Found in C.

4-4. शर्व-लिङ्ग-गते शिवे ।

5. ...स्त्वं पुमान् पर एव हि ।

6-6. य इदं पठते स्तोत्रं शृणुयाच्छ्रद्धयाऽपि यः । दशभिर्मुच्यते पापैः काय-वाक्-चित्त-सम्भवैः ॥ रोगस्थो रोगतो मुच्येद्विपद्भ्यश्च विपद्-युतः । मुच्यते बन्धनाद् बद्धो भीतो भीतेः प्रमुच्यते ।

7. After this line, दिव्यं विमानमारुह्य दिव्य-स्त्री-परिशोभितः ।

8. C गृहेऽपि लिखितं यस्य सदा तिष्ठति धारितम् । नाग्नि-चौर-भयं तस्य न सर्पादि-भयं क्वचित् ॥ ज्यैष्ठ-मासे सिते पक्षे दशमी हस्त-संयुता संहरेत् त्रिविधं पापं बुध-वारेण संयुता ॥

विनिश्चिपेत् । नाग्नि-चौर-भयं तस्य पापेभ्योऽपि भयं नहि[7] ॥ तस्यां दशम्यामेतत्तु[1] स्तोत्रं गङ्गा-जले स्थितः । जपंश्च दश-कृत्वश्च[2] दरिद्रो वापि चाक्षमः ॥ सोऽपि तत्-फलमाप्नोति गङ्गां संपूज्य यत्नतः । पूर्वोक्तेन विधानेन फलं यत् परिकल्पितम्[3] ॥ यथा गौरी तथा गङ्गा तस्माद् गौर्यास्तु पूजने । विधिर्यो विहितः[4] सम्यक् सोऽपि गङ्गा-प्रपूजने ॥ [5]यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा ह्युमा[5] । उमा यथा तथा गङ्गा चतूरूपं न भिद्यते ॥ [6]विष्णु-रुद्रान्तरं यच्च गङ्गा-गौर्यन्तरं तथा । श्री-गौर्योरन्तरं यच्च यो ब्रूते मन्द-धीस्तु सः[6] ॥"

नवमी-रात्रौ जागरणं कृत्वा दशम्यां कृत-स्नानादिः । ओं अद्य ज्यैष्ठ[7]-शुक्ल-दशम्यां हस्त-युतायां कोटि-जन्मार्जित-दश-विध-पाप-नाश-कामो भविष्य-पुराणोक्त-रीत्या दशहरा-पूजामहं करिष्ये । इति संकल्प्य विधिवत् स्नात्वा कृत-देवार्चनादिः गङ्गां दश-विधैर्गन्धैः पुष्पैर्धूपैर्नैवेद्यैः फलैस्ताम्बूलैश्चार्चयेदिति । ततो गङ्गायां यथाविधि[8] स्नात्वा ओं गङ्गायै नम इति-मन्त्रेण कृष्ण-तिलानां दश-प्रसृतीस्तथा सर्पिषां दश-प्रसृतीस्तथा दश-शक्तु-पिण्डान् तथा दश-गुड-पिण्डांश्च गङ्गायां क्षिपेत् । ततो गङ्गा-तीरे अष्ट-दल-पद्ममालिख्य तत्र वक्ष-

1. A.···मेतच्च ।  2. C. यः पठेद्दशकृत्वस्तु ।

3. B. यत् फलं संप्रकीर्तितम् ।

4. B. यो विधिर्विहितः ।

5-5. यथाहं त्वं तथा विष्णो यथा त्वं तु तथा ह्युमा ।

6-6. C. विष्णु-रुद्रान्तरं चैव श्री-गौर्योरन्तरं तथा । गङ्गा-गौर्यन्तरं चैव यो ब्रूते मूढधीस्तु सः ।

7. Omitted in A.  8. C. दशधा स-विधिः ।

सामान्य-वेष्टित-ग्रीवं जल-पूर्ण-कुम्भं कृत्वा तदुपरि शराविकादौ[1] हैमीं राजतीं मार्दीं वा प्रतिमां "चतुर्भुजां त्रि-नेत्राञ्च"इत्यादिना गङ्गा-प्रवाहे प्रतिमायाञ्च ध्यात्वा प्रत्येकं द्वात्रिंशद्रक्तिकाधिक-तोलक-द्वय[2]-सम्मितैक-पलात्मना गव्येन दुग्धेन दध्ना घृतेन मधुना खण्डेन च पञ्चामृतं कृत्वा तैले तत्-प्रतिमां स्नापयित्वा ओं नारायण्यै गङ्गायै नमो नम इति-मन्त्रेण इदं पाद्यम् एषोऽर्घ्यः इदमाचमनीयम् एष मधुपर्कः इदं पुनराचमनीयमिति प्रत्येकं दद्यात्।

ततो गन्धं दत्त्वा तत उक्त-मन्त्रेण त्रिः संपूज्य धूपादिकं दत्त्वा प्रतिमाग्रतः स्थण्डिले गोमयेनोपलिप्य नारायणं महेशं ब्रह्माणं भास्करं भगीरथं हिमवन्तं चोपचारैः संपूज्य दशभ्यो विप्रेभ्यो दश-तिल-प्रस्थान् दत्त्वा तथा दशभ्यो गोभ्यो दश-यव-प्रस्थान् दत्त्वा मत्स्य-कच्छप-मण्डूक-मकर-शिशुमार-दुन्दुभ-नक्र-जलौका-शम्बूक-शङ्खान् दश-जल-चरान् राजतान् पैष्टकान् वा गन्धादिभिरभ्यर्च्य गङ्गायां क्षिपेत्। ततो दश-घृत-प्रदीपान् प्रवाहे क्षिपेत्। सति सम्भवे गङ्गा-प्रतिमां रथमारोप्य भ्रामयेत्। ततोऽधिक-फलार्थं ओं नमो नारायण्यै दशहरायै नमो नम इति मन्त्रं पञ्च-सहस्रकृत्वो[3] जपेत्।

यत्र च भगवान्—देवी-पुराणे—"तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन। अन्नार्थिनमनुप्राप्तं भोज्यं[4] तं मनुरब्रवीत्॥ सक्तुभिः पिण्ड-दानन्तु संयावैः पायसेन च। कर्त्तव्यमृषि-निर्दिष्टं[5] पिण्याकेन गुडेन वा[6]॥ देयन्तु तिल-पिण्याकं भक्तिमद्भिर्नरैः सदा। श्राद्धन्तु तत्र कर्तव्यमर्घावाहन-वर्जितम्॥ श्व-ध्वाङ्क्ष-

1. A. वारिकादौ। 2. C. त्रय। 3. C. कृत्वा (?)।
4. A. तीर्थं। 5. C. मुनिभिर्दृष्टं। 6. C. च।

गृध्र-काकानां नैव दृष्टि-हतञ्च यत्[1]। श्राद्धं तत्[2] तैर्थिकं प्रोक्तं पितॄणां तुष्टि-कारकम्॥ [3]अकालेऽप्यथवा काले तीर्थे श्राद्धं तथा नरैः। प्राप्तैरेव सदा कार्यं कर्तव्यं पितृ-तर्पणम्॥ पिण्ड-दानं ततः शस्तं-पितृणामतिदुर्लभम्। विलम्बो नैव कर्तव्यो न च विघ्नं समाचरेत्[3]॥ 'संयावः' घृत-क्षीर-गोधूम-चूर्ण-साधितो भक्ष्य-विशेषः। 'पिण्याके'ति तिल-कल्क इति-प्रसिद्धिः। श्राद्ध-शेषेण पिण्ड-विधानात् पिण्ड-सम्बन्ध-मुखेन श्राद्धेऽप्येतानि द्रव्याणि [देयानि], फल-चमस-न्यायात्। 'तिल-पिण्याकमि'ति तिल-मात्र-विधिः। 'अकाले' विहितामावास्यादि-व्यतिरिक्ते, न तु निषिद्धेऽपि, निषेध-विरोधात्[4]।

"प्राप्तैरेवे"त्यादिना प्राप्ति-निमित्तकं श्राद्धमित्युक्तं, तेनैकस्यां यात्रायामेकस्मिंस्तीर्थे सकृदेव श्राद्ध-करणं, यात्रा-भेदे त्वावर्तते प्राप्ति-भेदात्। "पिण्ड-दानं ततः शस्तमि"ति गृह्य-मेधीयेन यावदुपकरणावच्छेदेन पिण्ड-दानातिरिक्ताङ्ग-निवृत्तिरिति नाशङ्कनीयम्। "अर्घावाहन-वर्जितमि"ति[5] वैयर्थ्यापत्तेः। तस्मा-"च्छस्तमि"ति श्रुतेः [इष्ट (?) श्राद्ध]-युतेष[7] स्तुति-मात्रमेतदिति।

केचित् "तीर्थे पिण्ड-दानस्य प्रधानतया विधिस्तेन पिण्ड-

---

1. PrayT., chap. गङ्गा-माहात्म्य, p. 73, l. 7-3, v. r. श्राद्धं तत्र तु···।  2. A. तु।

3-8. PrayT., chap. गङ्गा-माहात्म्य, p. 73, l. 4-7, v. r. पिण्ड-दानन्तु तच्छस्तं···S'radhaT, p. 366, ll. 4-7, v. r.···नैव विघ्नं···।

4. C. विधानात्। 5. A. वर्जमिति। 6. A. इष्ट-च तेष।

दान-मात्रादपि फलम् । अत एव वहवो गयायां[1] पिण्ड-दान-मात्र एव फलाभिधानमिति वदन्ति ।

जावालिः—"आपद्यनग्नौ तीर्थे च चन्द्र-सूर्य-ग्रहे तथा । आम-श्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि[2] ॥" 'आपत्' "आत्मनो देश-कालानां विप्लवे समुपस्थिते । आम-श्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि ॥" इत्युशनसा व्याहृता । 'अनग्नौ' पाक-योग्याग्नि-विरहे । एवञ्च "आम-श्राद्धप्रदोऽनग्निः सर्वं एव मनीषिणः । तेनाग्नौ-करणं कुर्यात् पिण्डं तेनैव निर्वपेत् ॥" अत्र 'अनग्निः' पाक-योग्याग्नि-रहितः । तेनायमत्र तात्पर्यार्थः—पाकेन श्राद्धासम्भवे आम-श्राद्धं कर्तव्यम् । युक्तञ्चैतत्, सर्व-शक्ति-नयेनोपपत्तौ[3] मूलान्तर-कल्पनाया अयुक्तत्वात् ।

एवञ्च काम्य-श्राद्धमामावेन न कर्तव्यम् । तदाह लघु-हारीतः—"श्राद्ध-विघ्ने द्विजातीनामाम-श्राद्धं प्रकीर्तितम् । अमावास्यादि-नियतं मास-संवत्सराहते ॥" 'नियतम्' अवश्य-कर्तव्यम्, तेन काम्य-निवृत्तिः । तीर्थ-श्राद्धं ग्रहण-श्राद्धञ्च काम्य-मप्यामेन न कर्तव्यम्, पूर्व-वाक्ये पृथगुपादानात् ।

मनुः—"दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूल-फलैर्वापि पितृभ्यः प्रीतिमावहन्[4] ॥" अन्नाद्यभावे पयोमूल-फलानि, तदभाव-कर्यात् । उदकन्तु सर्वाभावे । तदुक्तं भविष्य-पुराणे—"अशक्तावुदकेन तु" इति ।

1. A. गङ्गायां ।

2. TithiT 'ग्रह-प्रणेताः, Chap. ग्रहण, P. 415, ll. 10-11. S'raddhaT. प्रणेताः, chap. विहिताविहित-द्रव्यादि, p. 76, 4, 2-4.

3. C. सर्व-शक्तेन येनोपपत्तौ ।

4. Not traced in Manu. Found in S'ulapāṇi's श्राद्ध-विवेक, chap. नित्य-श्राद्ध, "मनुः", p. 451, ll. 11-12.

"पितृभ्य" इति पित्रादि-त्रिक-परत्वे ऽपि मातामहानामप्येवम्। यद्यपि 'देव-पूर्वं श्राद्धं कुर्यादि"ति पार्वण-प्रकरणोक्तं तत्र नादिश्यते प्रधानत्वात्तथापि "पितरौ यत्र विद्यन्ते तत्र मातामहा ध्रुवम्"[1] इति स्मृति-मञ्जरी-लिखित-वाक्यात्।

तथा ब्राह्मे—"असपिण्डीकरणादूर्ध्वं पितुश्च प्रपितामहः। स तु लेपभुजैर्वापि प्रलप्तः पितृ-पिण्डतः[2]॥ येषां हि यश्च तयोऽन्यः स तु लेपभुजो भवेत्। सोऽपि सम्बन्धतो हीनमुपभोगं प्रपद्यते। पिता पितामहश्चैव तथैव प्रपितामहः। पिण्ड-सम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः॥ लेप-सम्बन्धिनश्चान्ये पितामह-पितामहात्। प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः। इत्येव मुनिभिः प्रोक्तः सम्बन्धः साप्त-पौरुषः। यजमानात् प्रभृत्यूर्ध्वमनुलेप[3]-भुजस्तथा। ततोऽन्ये पूर्वजाः स्वर्गे ये चान्ये नरकौकसः। ये च तिर्यक्त्वमापन्ना ये च भूतादि-संस्थिताः। तान् सर्वान् यजमानो वै श्राद्धं कुर्वन् यथाविधि। स समाप्यायते विप्रा येन येन विदापितः[4]।"

"अन्नं विकरणं यत्तु मनुष्यैः क्रियते भुवि[5]। तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः॥ यदम्बु स्नान-वस्त्रोत्थं भूमौ पतति भो द्विजाः। तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते॥ यास्तु गन्धाम्बु-कणिकाः पतन्ति धरणी-तले। ताभिराप्यायनं तेषां देवत्वं ये गताः कुले॥ उद्धृतेष्वथ पिण्डेषु याश्चाम्बु-कणिका भुवि। ताभिराप्यायनं प्राप्ता ये तिर्यक्त्वं गताः कुले॥ ये

1. Found in S'raddhaT., chap. "पार्वण-श्राद्ध", p. 7. l. 1.
2. ब्रह्म-पुराण, p. 873, chap. 220, v 82.
3. C.···मन्वलेप...। 4. A. वेदाधितः (?)।
5. C. क्रियते तनुजैर्भुवि।

चादन्ताः[1] कुले बालाः[2] क्रिया-योग-पथे[3] स्थिताः। विपन्ना-स्त्वनधीकाराः सन्न्यास्त्रित-जलाग्निनः[4]॥ भुक्त्वा चाचमतां यच्च जलं चामाङ्घ्रि-शोधने। ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै॥ एवं यो यजमानस्य यच्च तेषां द्विजन्मनाम्। कश्चिज्जलान्न-विक्षेपः[5] शुचिरुच्छिष्ट एव च॥ तेनान्नेन कुले तत्र ये च योन्यन्तरं गताः। प्रयान्त्याप्यायनं विप्राः सम्यक् श्राद्ध-क्रियावता॥ अन्यायोपार्जितैरर्थै[6]र्यैदिदं क्रियते नरैः। तृप्यन्ति तेन चाण्डाल-पुक्कसाद्यासु योनिषु[7]॥ एवमाप्यायनं विप्रा बहूनामिह बान्धवैः। श्राद्धं कुर्वद्भिरन्नाम्बु-विक्षेपेण प्रजायते॥ तस्माच्छ्राद्धं नरो भक्त्या शाकेनापि यथाविधि। कुर्वीत कुर्वतः श्राद्धं कुले कश्चिन्न सीदति॥" तथा च पाद्मे—
—"पत्रैः पुष्पैः फलैर्मूलैः कुर्वन्तु पितृ-तर्पणम्। न तत् करोत्यग्निहोत्रं सुकृतं[8] योषितः सुतः।"

अथ श्राद्ध-विहिताविहित-द्रव्याणि।

तत्र व्यासः स्कान्दे—"वस्त्राभावे क्रिया नास्ति यज्ञा वेदास्तपांसि च। तस्माद्वासांसि देयानि श्राद्ध-काले विशेषतः"[9]॥ कौषेयं क्षौम-कार्पास-दुकूलमाविकं तथा। श्राद्धे त्वेतानि यो

---

1. A. वादन्ताः। 2. C. जाताः, 3. C. पथा।
4. C. फलार्थिनः। 5. C. केचिज्जलान्न-विक्षेपः (?)।
6. C. अन्यायोपार्जितैरर्थैः।
7. C. चाण्डालनपुक्कसाद्यासुयोनिषु (?)। 8. A. पतति।
9. Traced in "दान-क्रिया कौमुदी" p. 9, ll. 3-4 and ब्रह्म-पुराण, p. 877, chap. 220, v. 138.

दद्यात् तदा नाप्नोति वेदनाम्[1] ॥ क्षौम-सूत्रं नवं दद्याच्छाणं कार्पासिकं तथा। पत्रोर्णं पट्ट-सूत्रञ्च कौशेयञ्च विवर्जयेत्[2] ॥" ब्राह्मे—"वस्त्राभावे क्रिया नास्ति वेदा यज्ञास्तपांसि च। तस्माद्वासांसि देयानि श्राद्ध-काले विशेषतः[3] ॥ कौशेयं क्षौम-कार्पासं दुकूलमहतं तथा। श्राद्धे ह्येतानि यो दद्यात् कामानाप्नोति चोत्तमान्[4] ॥ 'अहतम्' अस्फुटितं, सर्वात्मना पवित्रमिति पारिजातः। "वर्जयेदद्दशं प्राज्ञः कीटाद्युपहतञ्च यदि"ति स्मृति-वचनञ्च।

पुराणेषु मत्स्य-सम्मतम्। "छिन्नमासन्नितं[5] वस्त्रमाविकञ्च न दुष्यति। आविकेन तु वस्त्रेण मानवः श्राद्धमाचरेत् ॥ गया-श्राद्ध-समं प्रोक्तं पितृभ्यो दत्तमक्षयम्। न कुर्यात् सन्धितं[6] वस्त्रं दैव-कर्मणि भूमिप ॥ न दग्धं न तु वै छिन्नं पारक्यञ्च विवर्जयेत्। काकविष्ठा[7]-समायुक्तमभिभूतञ्च यद्भवेत्। रजकादाहृतं यच्च तद्वस्त्रं संपरित्यजेत् ॥ कटि-सृष्टञ्च यद्वस्त्रं पुरीषं येन कारितम्[8]। यन्मूत्रं मैथुनञ्चापि[9] तद्वस्त्रं संपरित्यजेत् ॥ आविकं वै सदा वस्त्रं पवित्रं राजसत्तम। पितृ-देव-मनुष्याणां क्रियायाञ्च प्रशस्यते ॥ धौताधौतं तथा दग्धं[10] सन्धितं रजकाहृतम्। शुक्ल-सूत्रं रक्त-चित्रं तथापि परमं शुचि ॥ अग्नि-

1. Traced in ब्रह्म-पुराण, chap. 220, v 39, p. 887, v. r.··· दुकूलमहतं तथा। श्राद्धे त्वेतानि...दद्यात् कामानाप्नोति चोत्तमान्।

2. ब्रह्मपुराण, p. 877, chap. 220, v. 148, v. r.···दद्याच्छाणं कौशेयञ्च...। पात्रार्णं in C. 3. ब्रह्मपुराण, op. cit., v. 138.

4. Op. cit., v. 140, v. r. श्राद्धे चैतानि।

5. C. वासान्वितं। 6. A. सच्छिन्नं। 7. A. काकरक्ता।

8. C. कारयेत्। 9. C. वापि। 10. C. सर्वम्।

राविक-वस्त्रं हि ब्राह्मणाय तथा कुशा:[1]। चतुर्णां न कृता दीक्षा ब्रह्मणा परमेष्ठिना ॥"

अत्रि:—"अधौतं कारु-धौतञ्च परेद्युर्धौतमेव वा। कषायं मलिनं वस्त्रं कौपीनञ्च विवर्जयेत् ॥"

अथ श्राद्ध-विहिताविहित-फलानि।

तत्र ब्राह्मे—"आम्रमाम्रातकं बिल्वं दाडिमं बीज-पूरकम्। प्राचीनामलकं क्षीरं नारिकेलं करूषकम् ॥ नागरङ्गञ्च खर्जूरं द्राक्षा-नील-कपित्थकम्। एतानि फल-जातानि श्राद्धे देयानि यत्नत:[2] ॥" तथा भविष्ये—"यानि चाभ्यवहार्याणि स्वादु-स्निग्धानि भो द्विजा:। ईषदम्ल-कटून्येव देयानि श्राद्ध-कर्मणि ॥ मिष्ट-स्निग्धानि यानि स्युरीषत्-कट्वन्वितानि वै। स्वादूनि देव-भोज्यानि तानि श्राद्धे नियोजयेत्[3] ॥"

अविहितानि—"नान्नं करण[4]-काकोली बहु-पुत्रा[5]ऽर्जुनी-फलम्। जम्बीरं रक्त-बिल्वञ्च[6] शालस्यापि फलं त्यजेत् ॥"[7]

1. A. दर्भा:।

2. ब्रह्म-पुराण, p. 878, chap. 220, v 155—157. v. r.… दाडिम्बं…स्वरूपकं in A. नागरङ्गक in A.। After "एतानि फल-जातानि श्राद्धे देयानि यत्नत:", the lines "नारङ्गञ्च सखर्जूरं द्राक्षा-नील-कपित्थकम्। पटोलञ्च पियालञ्च कर्कन्धु-बदराणि च। विकङ्कतं वत्सकञ्च कर्कार्व्वारुकानपि" are found in ब्रह्म-पुराण।

3. ब्रह्म-पुराण, p. 883, chap. 320, v. 182(b)—183(a), and 184(b)-185(a), v. r.…कटुकानि च…।

4. V. r. करुणा in A; वरुणा in ब्रह्म-पुराण।

5. पत्रा in ब्रह्म-पुराण।

6. बहु-बीजञ्च।

7. Traced in ब्रह्म-पुराण, p. 879, chap. 229, v 170.

भत्यम्लं चातिलवणमतितिक्तं कटूनि च। आसुराणीह भोज्यानि तान्यं वातो नरस्त्यजेत्[1] ॥"

तथा प्रशस्ता व्रीहयः।

"यवैर्व्रीहि-तिलैर्माषैर्गोधूमैश्चणकैस्तथा[2]। सन्तर्पयेत् पितॄन् मुद्गैः श्यामाकैः सर्षप-द्रवैः[3]। नीवारैर्हस्ति-श्यामाकैः प्रियङ्गुभिस्तथाऽर्चयेत्[4] ॥ राजमाषानणूंश्चैव मसूरान् कोरदूषकान्। विप्रुषान् कोद्रवांश्चोरान् मर्कटांश्चापि वर्जयेत्[5] ॥"

तथा पयांसि।

"माहिषं चामरं मार्गमाविकैक-शफोद्भवम्। स्त्रैणमौष्ट्रमपवित्रं दधि क्षीरञ्च वर्जयेत्[6] ॥ गुड-शर्कर-मत्स्यण्डी देया फाणितमुर्मरम्[7]। गव्यं पयो दधि घृतं तैलञ्च तिल-सम्भवम्। सैन्धवं सागरोत्थञ्च लवणं सारसन्तथा[8] ॥"

---

1. ब्रह्म-पुराण, p. 880, chap. 220, v. 18(b)—185(a), v. r.···तिक्त-कटूनि च। आसुराणीह भोज्यानि तान्यतो दूरतस्त्यजेत्। "असुराणां हि" in C.

2. A,···ग्रीष्मकैः।     3. C, सर्व-पत्रकैः।

4. "यवैर्व्रीहि··· स्तथाऽर्चयेत्" traced in ब्रह्म-पुराण, p. 878, chap. 220, v. 154-155(a).

5. Op. cit., v. 168, v. r. राज-माषांश्च चणकान्···। विप्रुषान् मर्कटांश्चैव कोद्रवांश्चैव...। मर्कटांश्चैव in C.

6. Op. cit, v. 169, v. r. स्त्रैणमौष्ट्रमाविकञ्च दधि क्षीरं घृतं त्यजेत्।

7. ब्रह्म-पुराण, op. cit., v. 159(a), v. r. गुड-शर्कर-मत्स्यण्डी देयं फाणितमुर्मरम्।

8. Op. cit., v. 15 (b)—160(a).

तथा शाक-पुष्पादि ।

"काल-शाकं तथ्यु,चीयं वास्तुकं मूलकं तथा । शाकमारण्यकञ्चैव दद्यात् पुष्पाण्यमूनि च[1] ॥ जाति-चम्पक······मल्लिका-बाण-बर्व्वरी । चूताशोकाटरूषाश्च तुलसी तिलकन्तथा[2] ॥ पावन्तीं शतपत्रञ्च गन्ध-शेफालिकामपि । कुब्जकं तगरञ्चैव मृगमारञ्च केतकीम्[3] ॥ यूथिकामतिमुक्तञ्च श्राद्ध-योग्यानि भो द्विजाः । कमलं पद्म-कुमुदं कह्लारञ्च नियोजयेत्[4] ॥"

तथा, "नियोजयेच्छ्,चीन् गन्धांश्चन्दनागुरु-कुङ्कुमान् । कुष्ठ-मांसी-वालकञ्च त्वक्-कुठी-जाति-पत्रकम्[5] ॥ नलिकोशीर-मुस्ताश्च ग्रन्थि-पर्णं वसुन्धरम्(?) । सुराणामेवमादीनि गन्ध-योग्यानि चक्षते[6] ॥" तथा, "गुग्गुलुं चन्दनञ्चैव श्रीवासमगुरुं तथा । धूपानि पितृ-योग्यानि ऋषि-गुग्गुलुमेव च[7] ॥"

---

1. ब्रह्म-पुराण, p. 878, chap. 220, v. 161,

2. C. मालती बाण-बर्व्वरम् । Op. cit., v. 162, v. r. "जाति-चम्पक लोध्राश्च मालिका-बाण-बर्व्वरी । कुन्ताशोकाटरूषश्च ।

3. Op. cit., v. 163, v. r. पावन्तीं शत-पत्राश्च···मृगमारञ्च-केतकीम् । ("पारन्ती" and "कुब्जकं भगवञ्चैव" in C.)

4. Op. cit., v. 164, v. r.···कमलं कुमुदं पद्मं पुण्डरीकञ्च यत्नतः ॥

5. Op. cit., v. 165, v. r. इन्दीवरं कोकनदं कह्लारञ्च नियोजयेत् । कुष्ठं मांसी वालकञ्च कुक्कुटी-जाति-पत्रकम् ॥ "त्वक्-कुठी" in C.

6. Op. cit., v. 166, v. r. नलिकोशीर-मुस्ताश्च ग्रन्थि-पर्णी च सुन्दरी । पुनरप्येवमादीनि गन्ध-योग्यानि चक्षते ॥ "ग्रन्थि-पर्ण" in C.

7. Op. cit., v. 177. v. r. गुग्गुलं...ऋषि-गुग्गुलमेव च । "ऋषि-गुग्गुल" in C.

तथा, "मासं प्रीतिः पितॄणान्तु हविष्यान्नेन जायते[1] । मासद्वयं मत्स्य-मांसैस्तृप्तिं यान्ति पितामहाः ॥ त्रीन् मासान् हारिणं मांसं विज्ञेयं पितृ-तृप्तये[2] । पुष्णाति चतुरो मासाञ्छशस्य पिशितं पितॄन् ॥ शाकुनं पञ्च वै मासान् षण्मासाञ्छूकरामिषम्[3] । छागलं सप्त वै मासान् ऐणेयं चाष्ट-मासकम् ॥ करोति तृप्तिं नव वै रुरु-मांसं न संशयः[4] । गवयस्य मांसं तृप्तिं करोति दश-मासिकीम् । तथैकादश-मासन्तु औरभ्रं पितृ-तृप्तिदम्[5] ॥"

तथा ।—"संवत्सरं तथा गव्यं पयः पायसमेव च । वार्ध्रीणसामिषं लौहं काल-शाकं तथा मधु ॥ रोहितामिषमच्छं दत्त्वा तु स्व-कुलोद्भवाः । अनन्तां वै प्रयच्छन्ति तृप्तिं गौरीसुतस्तथा(?) । पितॄणां नात्र सन्देहो गया-श्राद्धञ्च भो द्विजाः[6] ॥ यो ददाति गुडोन्मिश्रांस्तिलान् वा श्राद्ध-कर्मणि । मधुरं मधु-मिश्रं वा अक्षयं सर्वमेव तत् ॥[7]"

तत् सर्वं यत्न-पुरःसरं शुचिनोत्तम[8]-शुचिना द्रव्य-पात्रेण श्राद्धं कार्यम् । एतद्विहिताविहित-वस्तु सर्वत्र श्राद्धे बोद्धव्यम् ।

---

1. ब्रह्म-पुराण, p. 870, v. 22, v. r. मासं तृप्तिः ।

2. Op. cit., v. 23.

3. Op. cit., v. 24,

4. Op. cit., v. 25.

5. Op. cit., v. 26., v. r. गव्यं मांसं पितृ-तृप्तिं··· ।···मासांस्तु

6. Op. cit., v. 27. v, r. दत्तान्यात्म-कुलोद्भवैः । अनन्तां···तृप्ति-योगं सुतांस्तथा । "स्व-कुलोद्भवैः" in C.

7. Op. cit., p. 870, chap 229, v. 30, v. r. श्राद्ध-कर्मणि । मधु वा । "तिलानाम्" in C.

8. शुचिनोत्तम omitted in C.

प्रकरणात्तीर्थ-श्राद्धं एवं मतिश्चाऽत्रे ति, साधारण-विधि-विधानात् ।

भविष्ये—"गया-श्राद्धं कृतं तेन उत्सृष्टश्च वृषस्तथा । येन तद्वीचि-संसिक्ते तीरे श्राद्धमकारि च ॥" अद्य गङ्गा-वीचि-संसिक्त-तीरे गया-श्राद्ध-वृषोत्सर्ग[1]-जन्य-फल-सम-फल-प्राप्ति-कामः श्राद्धमहं करिष्ये । एतत्तु श्राद्धं तीर्थ-श्राद्धेतरम् । पाद्मे ।—"एषु तीर्थेषु यच्छ्राद्धं तत् कोटि-गुणमिष्यते । गङ्गायां यत् कृतं श्राद्धं तच्छ्राद्धमपवर्गदम् ॥" अद्य गङ्गा-गर्भे पितॄणामपवर्ग-कामः श्राद्धमहं करिष्ये ।

बृहद्वशिष्ठः—"गङ्गा-यमुनयोस्तीरे पयोष्ण्यमर-कण्टके । नर्मदायां गया-तीर्थे सर्वमानन्त्यमश्नु ते ॥"

अथ पिण्ड-प्रकरणम् ।

एतत्तु केवल[2]-पिण्ड-दानम् । व्यवस्था तु केवल-पिण्ड-दानस्य श्राद्ध-प्रकरणे लिखिता । कौर्मे—"सकृद् गङ्गाभिगमनं कृत्वा पिण्डं ददाति यः । तारिताः पितरस्तेन भवाम्भोधेस्तिलोदकैः[3] ॥" अद्य गङ्गा-गर्भे भवाम्भोध्यधिकरणक-पितृ-तारण-कामः पितृभ्यः सतिल-पिण्ड-दानमहं करिष्ये । तथा—"गङ्गायाञ्च गयायाञ्च पिण्ड-दाने समं फलम् । विशेषतः कलि-युगे गङ्गा-पिण्डं प्रशस्यते ॥" अद्य गङ्गा-गर्भे गया-पिण्ड-दान-जन्य-फल-विशिष्ट-फल-प्राप्ति-कामः पितृभ्यः पिण्ड-दानमहं करिष्ये ।

ब्रह्माण्डे—"गङ्गायां पिण्ड-दानेन पितरस्तु तिलोदकैः । नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥" अद्य गङ्गा-गर्भे पितृ-मुक्ति-कामः सतिल-गङ्गोदक-सहितं पिण्डमहं दास्ये । तथा

1. वृषोत्सर्ग omitted in C.

2. C. केवलमेव ।

3. KūrP., 34. 8

—"गङ्गायां विरजे चैव माहेन्द्रे जाह्नवी-तटे[1]। अत्र पिण्डप्रदो याति ब्रह्म-लोकमनामयम् ॥" अद्य जाह्नवी-तटे अनामय[2]-ब्रह्म-लोक-प्राप्ति-कामः पितृभ्यः पिण्ड-दानमहं करिष्ये ॥

अथ जल-प्रकरणम्।

लैङ्गे[3] "ब्रह्मघ्ना गुरुघ्ना गोघ्नस्तेयी च गुरु-तल्पगः। गङ्गाम्भसा च पूयन्ते नात्र कार्या विचारणा ॥" अद्य ब्रह्म-वध-गो-वध-स्तेय-गुरु-तल्प-गमन-जन्य-पाप-क्षय-कामो गङ्गाम्भसा स्नानमहं करिष्ये। पान-स्पर्शनयोरेकतरस्य करणेऽप्येतदेव फलम्। दान-धर्मे—"यो वक्त्रसुद्धृतं वापि शीतमुष्णमथापि वा। गाङ्गेयं हरते तोयं पापमामरणान्तिकम् ॥" अद्य मरणान्तिक-पाप-हरण[4]-कामो गङ्गा-तोयमहं पिबामि। स्पर्श-स्नानयोरप्येवम्।

ब्राह्मे—"चिन्तामणि-गणाश्चापि[5] गङ्गायास्तोय-बिन्दवः। विशिष्टा ये प्रयच्छन्ति भक्तेभ्यश्चिन्तितं फलम् ॥" अद्य चिन्तामणि-गणाधिकरणक-प्रार्थित-चिन्तित-फल-विशिष्ट-[6]फल-प्राप्ति-कामो गङ्गा-तोय-पानमहं करिष्ये। [7]स्नानादिकेऽप्येवम्। भविष्ये[7]—"जल-कृत्यानि सर्वाणि गङ्गा-तोयैर्न सर्वदा। नियमेनैव कुरुते यावज्जीवं प्रतिज्ञया ॥ स एव जन्म-सुकृतस्तु स मुनिः स च पण्डितः। तेनैव साक्षात् तत् प्राप्तं मोक्षाख्यं परमं पदम् ॥" अद्य परम-मोक्ष-प्राप्ति-कामोऽद्यारभ्य यावज्जीवं सर्व-जल-कृत्यानि गङ्गा-तोयैर्नाहं करिष्ये।

---

1. C. माहेन्द्रे विरजे चैव गङ्गायां जाह्नवी-तटे।
2. A. पित्रनामय।
3. "लैङ्गे" not found in C.
4. C. क्षय।
5. C. गणश्चापि।
6. Not found in C.

7-7. Not found in C.

अथ तोय-पान-प्रकरणम् ।

स्कान्दे—"योऽसौ निरञ्जनो देवश्चित्-स्वरूपी जनार्दनः । स एव द्रव-रूपेण गङ्गाम्भो नात्र संशयः[1] ॥" स्कान्द-मात्स्ययोः—"तीर्थ-यात्रादिकं कृत्स्नमकुर्वाणोऽपि मानवः । गङ्गा-तोयस्य माहात्म्यात् सोऽप्यत्र फलभाग्भवेत्[2] ॥" भविष्ये—"कन्या-दानैस्तथाऽन्यत्र भूमि-दानैश्च भक्तितः । अश्व-दानैश्च गो-दानैः स्वर्ण-दानादिभिस्तथा ॥ रथाश्व-गज-दानैश्च यद् यज्ञाभमुदा-हृतम् । तत्तच्छत-गुणं गङ्गा-तोय-पानादवाप्नुते ॥" अथ बहु-कन्या-बहु-भूमि-बह्वश्व-बहु-गो-दान-बहु-स्वर्ण-दान-रथाश्व-गज-दान-जन्य-पुण्य-शत-गुण-[पुण्य]-प्राप्ति-कामो गङ्गा-तोय-पानमहं करिष्ये ।

महाभारते—"चान्द्रायण-सहस्रं तु यश्चरेत् काय-शोधनम् । यः पिबेद्वै यथेष्टन्तु गङ्गाम्भः स विशिष्यते[3] ॥" अथ चान्द्रायण-सहस्र-जनित-काय-विशुद्धि[4] [विशिष्ट-शुद्धि] प्राप्ति-कामो गङ्गाम्भः-पानमहं करिष्ये ।

ब्रह्माण्डे—"गङ्गा-तीरे वसेन्नित्यं गङ्गा-तोयं पिबेत् सदा । दीक्षितः सर्व-यज्ञेषु सोम-पानं दिने दिने ॥" अथ सर्व-यज्ञ-दीक्षित[त्व]-जन्य-पुण्य-सम-पुण्य-प्राप्ति-पूर्वकं प्रतिदिनं सोम-पान-प्राप्ति-कामो गङ्गा-तोय-पानमहं करिष्ये ।

---

1. PrayT., chap. गङ्गा-माहात्म्य, p. 93, ll. 1-2. "भविष्य-पुराणे ।" 2. Op. cit., p. 7, ll. 9-10.

3. PadmaP., सृष्टि, chap. 62, p. 738, v. 56; v. r. चान्द्रायण-सहस्राणि...पानं कुर्याद् यथेच्छया; SkanP., v. 92. p. 2230. 4. त्व-शुद्धि not found in C.

स्कान्दे—"गण्डूष[1]-मात्र-पानेन अश्वमेध-फलं लभेत्। स्वच्छन्दं यः पिबेदाप[2]स्तस्य मुक्तिः करे स्थिता[3] ॥" अद्याश्वमेध-यज्ञ-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-जल-पानमहं करिष्ये। सकृदस्य-जल-पान-मात्र एतदेव फलम्, स्वच्छन्द-जल-पाने तु मुक्तिः फलम्।

दान-धर्मे—"चान्द्र-व्रत-सहस्रन्तु यश्चरेत् काय-शोधनम्। पिबेद् यश्चापि गङ्गाम्भः समौ स्यातां नवा समौ[4] ॥" अद्य चान्द्रायण-व्रत-सहस्र-करणक-काय-शोधन-विशिष्ट-काय-शुद्धि-कामो गङ्गाम्भः-पानमहं करिष्ये।

स्कान्दे—"त्रिभिः सारस्वतं तोयं सप्तभिश्चाथ यामुनम्। नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्यति[5] ॥ नाभ्यन्तर्गत-तोयानां मृतानां क्वापि देहिनाम्। तद्वत्तीर्थ-फल-प्राप्तिर्नात्र कार्या विचारणा[6] ॥ वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं दलम्। न वर्ज्यं जाह्नवी-तोयं न वर्ज्यं तुलसी-दलम्[7] ॥"

आश्रय-प्रकरणम्।

ब्रह्माण्डे—"परमात्मा शिवो ह्यन्यस्तस्मादन्या हि[8] जाह्नवी।

---

1. D. गण्डूष-पान-मात्रेण। 2. A. पिबेच्चाप।

3. PrāyT., chap. गङ्गा-माहात्म्य, p. 93, ll. 2-4.

4. MahBh. 13, 26, 39. Also found in PadmaP., सृष्टि. 62., p. 7.8, v. 55, v. r., चान्द्रायण-सहस्राणि···पानं कुर्याद् यश्चिच्छया गङ्गाम्भः न विशिष्यते, SkanP., v. 104, p. 2220.

5. PrāyT., chap. गङ्गा-माहात्म्य, p. 103, ll. 4-5.

6. Op. cit., ll. 7-8, v. r. मृतानां क्वापि···तत्तीर्थ-फलावाप्ति···।

7. ĀhnikaT., chap. विष्णु-पूजा, p. 197, ll. 20-21.

8. V. r. A. तस्मादन्या च।

इति यः सेवते गङ्गां स न मोक्षस्य[1] भाजनम् ॥" दान-धर्मे—"अन्धाः क्लीवा जडा व्यङ्गाः पतिता रोगिणोऽल्पजाः। गङ्गां संसेव्य पुरुषा दैवैर्गच्छन्ति तुल्यताम्[2] ॥" महाभारते—"पितृ-मातृ-सुतैः सर्वैः संत्यक्तः पतितोऽपि वा। महा-रौरव-योग्यश्चेत्तामाश्रित्य दिवं व्रजेत् ॥" दान-धर्मे—"ऊर्जावतीं महापुण्यां मधुमतीं त्रिवर्गगाम्[3]। त्रिलोक-गोप्त्रीं ये गङ्गामाश्रितास्ते दिवं गताः ॥" अद्य दिव-गमन-कामो गङ्गामहमाश्रये।

तथा—"योऽस्यां वसेद् द्रवगति[4] चापि मर्त्यस्तस्मै प्रयच्छन्ति शुभानि देवाः। तद्भाविताः[5] स्पर्शन-दर्शनेन[6] इष्टां गतिं तस्य सुरा दिशन्ति[7] ॥" अद्य बहु-शुभ-प्राप्ति-कामो गङ्गा-वासमहं करिष्ये। नारदीये—"किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः। वास एव हि गङ्गायां ब्रह्म-ज्ञानस्य कारणम् ॥" अद्य ब्रह्म-ज्ञान-प्राप्ति-कामो गङ्गा-वासमहं करिष्ये। स्कान्दे—"सर्व-देवैश्च मर्त्यैश्च पूजनीयो महर्षिभिः। यो वै गङ्गां समाश्रित्य सुखं तिष्ठति निर्भयः[8] ॥" अद्य सर्व-देव-बहु-मर्त्य-बहु-महर्षि-पूजनीयत्व[9]-प्राप्ति-कामो गङ्गामाश्रित्य स्थितिमहं करिष्ये।

दान-धर्मे—"लम्बे दवाक्शिरा[10] यस्तु युगानामयुतं पुमान्। यस्तिष्ठति यथेष्टन्तु गङ्गायां स विशिष्यते[11] ॥" "तिष्ठेद् युग-सहस्रन्तु पादेनैकेन यः पुमान्। मासमेकन्तु गङ्गायां समो

1. V. r. C. - स नो मोक्षस्य। 2. PrayT., pp. 370-371.
3. C. त्रिवर्त्मदाम्। MahBh., 13. 26. 84, p. 101; v. r. त्रिवर्त्मगां...गङ्गां संश्रिताः। 4. C. यथेष्टवति (?)
5. C. तत्ताविताः। 6. दर्शन-स्पर्शनेन in C.
7. MahBh., 13. 26. 85, v. r. यो वत्स्यति···सुखानि। C. दिशन्ते। 8. SkanP., v. 25, p. 2216. 9. C. निर्भय-प्राप्ति।
10. C. लम्बेतावाक्शिरा।
11. MahBah. 13. 26. 41; v. r. लम्बेतावाक्शिरा।

स्नातां न वा समो[1] ॥" अद्य लम्बमान-शिरोऽवाग् युगायुत-स्थिति-जन्य-पुण्य-विशिष्ट-पुण्य-प्राप्ति-कामो गङ्गा-तीरे स्थितिमहं करिष्ये। अद्यैक-पाद-धारणक-युग-सहस्र-स्थिति-जन्य-पुण्य-विशिष्ट-पुण्य-प्राप्ति-कामो मासमेकं गङ्गा-तीरे स्थितिमहं करिष्ये।

ब्राह्मे—"लम्बेदवाक्[2]शिरा यस्तु युग-कोटिं समाहितः। श्रयेद् यथेष्टं गङ्गां यः स च तस्माद्विशिष्यते ॥" अद्य लम्बमान-शिरोऽवाग् युग-कोटि-समाहित-स्थिति-जन्य-पुण्य-विशिष्ट-पुण्य-प्राप्ति-कामो गङ्गामहमाश्रये।

भविष्ये—"किं तस्य यज्ञ-दानेन किं जपैस्तपसापि वा। वक्ष्यामिनापि किं तस्य यो वै गङ्गां न सेवते ॥" महाभारते—"पूर्वे वयसि पापानि कृत्वा कर्माणि ये नराः। पश्चाद् गङ्गां निषेवन्ते[3] तेऽपि यान्ति परां गतिम् ॥" अद्य पूर्व-वयःकृत-सर्व-पाप-कर्म-नाश-पूर्वक-परम-गति-प्राप्ति-कामो गङ्गामहमाश्रये।

ब्रह्माण्डे—"गङ्गा-सेवा-परस्येह दिवसार्धेन यत् फलम्। न तच्छक्यं प्रयत्नेन प्राप्तुं क्रतु-शतैरपि ॥" अद्य बहु-क्रतु-शत-जन्य-फल-विशिष्ट-फल-प्राप्ति-कामो गङ्गामहं सेवे।

स्कान्दे—"अहो किं बहुनोक्तेन गङ्गा सेव्या नरैः सदा। नान्यत् संसार-दुःखस्य[4] नाशकं मोक्ष-दायकम् ॥" अद्य सांसारिक-दुःख-नाश-पूर्वक-मोक्ष-प्राप्ति-कामो गङ्गामहं सेवे।

नारदीये—"महापातकिनो मर्त्याः सेवन्ते यदि जाह्नवीम्।

---

1. Cp. SkanP., v. 94, p. 2230. MahBh. 13. 26. 40; v. r. पद्भैकेन ; 1st. line found in SkanP., v. 86, p. 1437.

2. C. लम्बेतावाङ्। 3. MahBh. 13. 26. 30. A. समाश्रित्य।

4. C. दुःखस्य।

महापातक-पञ्चभरो मुच्यतेऽन्यस्य का कथा ॥" अथ पञ्च-महापातकादि-सर्व-पातक[1]-नाश-कामो जाह्नवीमहं सेवे ।

भविष्ये—"त्रि-रात्रं सप्त-रात्रं वा स्थिति-मात्रेण भक्तितः । गङ्गा-तीरे नरो यस्तु नरकं स न पश्यति ॥" अथ नरक-दर्शनाभाव-कामस्त्रि-रात्रं सप्त-रात्रं वा गङ्गा-तीरे स्थितिमहं करिष्ये । नारदीये—"कलौ तत्-परम-ब्रह्म-प्राप्तये सत्वरं नृणाम् । गङ्गा-भजनमेवाहुर्महोपायं महर्षयः ॥" अथ पर-ब्रह्म-प्राप्ति-कामो गङ्गा-भजनमहं करिष्ये ।

ब्राह्मे—"तिष्ठेद् युग-सहस्रन्तु पादेनैकेन यः पुमान् । सेवते मासमेकन्तु गङ्गाम्भः स विशिष्यते ॥" अथैक-पाद-करणक-युग-सहस्र-स्थिति-जन्य-पुण्य-विशिष्ट-पुण्य-प्राप्ति-कामोऽद्यारभ्य मास-मेकं गङ्गाम्भःसेवनमहं करिष्ये ।

अथ प्रायश्चित्त-प्रकरणम् ।

स्कान्दे—"प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते । यत्र गङ्गा महाराज प्रायश्चित्तन्तु तत्र का ॥" महाभारते—"चान्द्रायणं पराकं वा प्राजापत्यमथापि वा । प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते ॥" तथा च[2] पाद्मे—"प्रायश्चित्तं परं तीर्थ-स्नानं महर्षिभिः कृतम् । किन्तु तीर्थे त्वजेन्नीकर्मनसाऽप्यमिवां क्रियाम् ॥"

ननु मन्वादि-धर्म[3]-शास्त्रे प्रायश्चित्त-प्रकरणे[4] ब्रह्म-वधादि-पातके[5] प्रायश्चित्तत्वं न गङ्गायाः[6] शिव-गोविन्दयोर्नाम च, तत्-

1. सर्व-पातक is omitted in C.
2. तथा च is omitted in C.
3. धर्म is omitted in C.
4. C. प्रकरणम् ।
5. पातके is omitted in C.
6. A. गङ्गा-शिव ।

कथं न[1] विहितम्? तथा च नन्दिकेश्वरे—"कोटयो ब्रह्म-हत्याया[2] अगम्या-गमनस्य च। सद्यः प्रलयमायान्ति महा-देवेति कीर्तनात्॥" स्कान्दे—"कृत-[3]पापेऽनुतापो वै यस्य पुंसः प्रजायते। प्रायश्चित्तन्तु तस्यैवं[4] शिव-संस्मरणं परम्॥" ब्राह्मे—"गोविन्दं संस्मरेद् यस्तु शाठ्येनापि सकृन्नरः। सर्व-पापैः प्रमुच्येत तत्-क्षणान्नात्र संशयः॥" ब्राह्मे—"अप्यन्य-चित्तः क्रुद्धोऽपि यः सदा कीर्तयेद्धरिम्। सोऽपि दोष-क्षयान्मुक्तिं लभेच्चेदि-पतिर्यथा॥"

सत्यं नहि लघु-कर्मणि गुरु-कर्मणो विधानम्। यदाह विष्णुः—"एनसि लघुनि लघूनि गुरुणि गुरूणि"[5] प्रायश्चित्तानि इति शेषः। तथा ब्राह्मे—"पापकृद् याति नरकं प्रायश्चित्त-पराङ्मुखः। पापानामनुरूपाणि प्रायश्चित्तानि तद् यथा॥ तथा तथैव संस्मृत्य[6] प्रोक्तानि परमर्षिभिः। पापे गुरूणि गुरुणि स्वल्पान्यल्पे च तद्विदः। प्रायश्चित्तानि विप्रेन्द्रा जगुः स्वायम्भुवादयः॥" तथा च स्कान्दे—"पापे लघूनि लघुनि गुरूणि च गुरुण्यपि। प्रायश्चित्तानि दीयन्ते नान्यथा शुध्यति[7] नरः॥" इति वेद-दर्शनात्। गङ्गाया गरीयस्त्वात्[8] प्रायश्चित्तत्वं न [9]न निरूपिता गङ्गेति।

---

1. A. नाम-कथनं। 2. C. कोटिशो ब्रह्म-हत्यायाः।
3. V. r. कृते in C. 4. V. r. तस्यैकं in C.
5. PrayT. "गौतमः", p. 30, l. 3. 6. A. संस्मृत्या।
7. C. शुध्यते ; PrayT. विष्णु-पुराणे, chap. "गुरु-पापेन लघु-पाप-नाशः," p. 67. ll. 9-10 ; v. r, प्रायश्चित्तानि मैत्रेय।
8. C. गयागरीयस्त्वात् (?)।
9. Add. r. C. प्रायश्चित्ते।

एवं शिव-गोविन्दयोर्नाम्नस्तु विशेषः परमो मत[1] इति। तथा च पाद्मे—"धर्म-द्रवं[2] ह्यपां बीजं वैकुण्ठ-चरण-[3]च्युतम्। धृतं मूर्ध्नि महेशेन यद् गाङ्गममलं जलम्॥ तद्ब्रह्मैव न सन्देहो निर्गुणं प्रकृतेः परम्[4]। तेन किं समतां गच्छेदपि ब्रह्माण्ड-गोचरे॥" तथा—"गङ्गा गङ्गेति यो ब्रूयाद्[5] योजनानां शतैरपि। नरो न निरयं याति किं तया सदृशं भवेत्॥" तथा स्कान्दे—"गङ्गायाः सदृशं तिष्ठेदन्यद् ब्रह्माण्ड-गोचरे। स गच्छेद् रौरवं विप्रा यावदाहूत[6]-संप्लवम्॥"

यत्र प्रायश्चित्तत्वेन[7] स्कन्द-पुराणादिषु विवेचितम्[8], तत्तु एतेषां प्रायश्चित्तत्वेन प्रतिपादन-मात्रं दर्शितमिति। तथा च शिष्ट-तन्त्रम्—"तावच्च पातकं कर्तुं शक्ताः पातकिनो जनाः। गङ्गा यत्र भवेत् पुंसां प्रायश्चित्तं शिवोऽवदत्॥"

किञ्च लोकानां[9] स्वातन्त्र्य-वृत्त्यभावाद् बह्वायास-साध्य-प्रायश्चित्त-दर्शनात् प्रायः पाप-निवृत्ता[10] लोकाः। एतस्मिन् विहिते[11] सुख-साध्यतया अगम्या-गमनादिषु स्वेच्छया प्रवृत्तिरिति। तथा च स्कान्दे यम-वाक्यं विष्णुशर्माणं प्रति—

1. C पूर्वस्येव वाक्यस्य इति। 2. C. द्रवी।

3. C. चरणाच्च्युतं।

4. PadmaP., स्वर्ग॰, p. 105, v. 119-120.

5. A. ये ब्रूयुः, PadmaP., सृष्टि॰, chap. 62, v. 76, p. 739, v. r. शतैरपि मुच्यते सर्व-पापेभ्यो विष्णु-लोकं स गच्छति।

6. यदेदाहूत-संप्लवम्, 7. न omitted in C.

8. C. स्कन्दपुराणादिष्वविवेचितम्।

9. C. लोपनां (?) 10. C. निरता।

11. C. विहित।

"स्वल्प-साध्येऽपि[1] दुःसाध्यं श्रावयेत् सततं जने। यथा पापे न वर्तेत प्रायश्चित्त-भयादितः॥ न निर्दिशेदल्प-साध्यं प्रायश्चित्तं नरे बुधः। तस्मिन् संक्रमते पापं कर्ता तु तद्विमुच्यते[2]॥" इत्यादि-वचन-दर्शनादिति ध्येयः।

स्कान्दे—"कृत्वापि दुस्तरं पापं मज्जेद् गङ्गाम्भसि प्रिये। तत्क्षणादेव तद् याति पापमुद्दिश्य मज्जनात्॥" पाद्मे—"नान्येन दृश्यते लोके क्रिया नरक-गामिनी[3]। गङ्गाम्भसि प्रयत्नेन स्नातव्यं तेन मानवैः।"

अद्य कृतैतदमुक[4]-पाप-नाश-कामो गङ्गा-स्नानम् अहं करिष्ये। एतत्तु स्नानं सर्वात्मना सर्व-भाव-शुद्धता वेदाः[5] सत्यमिति हृदये विनिर्धार्यानन्य-मानसं विधाय गङ्गां ध्यायन् नारायणं स्मरन् "गङ्गायामेतत्-स्नानादेतत् पापं मे यास्यती"ति निश्चित्य स्नायात्। "भावानुरूप-फलदा गङ्गा सर्व-जगद्धिता" इति—वेद-दर्शनात्।

तथा स्कान्द-भविष्ययोः—"स्नान-मात्रे च गङ्गायां पापं ब्रह्म-वधादिकम्। दुराधर्षं कथं याति चिन्तयेद् यो वदेदपि॥ तस्याहं प्रददे पापं कोटि-ब्रह्म-वधोद्भवम्। स्तुति-वादमिमं मत्वा कुम्भीपाके महीयते। आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः[6]॥" तथा च व्यास-संहितायां विष्णु-वाक्यम् "उत्क्षिप्य हस्तौ वक्ष्यामि शृणुध्वं मे सुरासुराः। सन्देहो नैव कर्तव्यो

1. C. ऽपि। 2. These two verses are also found in PrayT., chap. गुरु-प्रायश्चित्तेन लघु-पाप-नाशः, pp. 67-68, "गङ्गा-वाक्यावलि-धृत-स्कन्द-पुराणात्"; v. r., साध्ये च।

3. C. दायिनी। 4. C. अद्यैतदमुक। 5. C. वेदः।

6. PrayT., chap. गङ्गा माहात्म्य, ll. 1-5, p. 71.

गङ्गायां सर्व-कर्मसु ॥" इति शिवादि-वचन[1]-दर्शनात् अन्यथा-भावं वर्जयेत्। यत्तु याज्ञवल्क्योक्तम्—"प्रायश्चित्तैरपैत्येनो यदज्ञान-कृतं भवेत्। कामतोऽव्यवहार्यस्तु[2] सर्व-वेदेषु दृश्यते[3] ॥" तत्तु बहु-पुराणैक-वाक्यतया सर्व-पुराण-विरोधाच्च गङ्गेतर-प्रायश्चित्तेषु बोद्धव्यम्। तत्रापि च पाप-विशेषेषु बोद्धव्यम्।

तथा पाद्मे—"सकृद्गङ्गाम्भसि स्नातः पूतो गाङ्गेय-वारिणा। नरो न निरयं[4] याति यदि[5] पातक-राशिकृत् ॥ व्रत-दान-तपो-यज्ञाः पवित्राणीतराणि च। बिन्दोरेकस्य गङ्गाया न समानि इति श्रुतिः[6] ॥" भविष्ये—"ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्च-पातकी सर्वतो निष्कृतिं याति गङ्गा-स्नानाच्च संशयः ॥" वन-पर्वणि—"अलक्ष्म्या किल संयुक्तो वृत्रहन्ता शचीपतिः। आप्लुतः सर्व-पापेभ्यो गङ्गायान्तु स मुक्तवान् ॥" इति पुराण-दर्शनात्[7] शिव-वचन-स्वरसाच्चातिदेशिक-ब्रह्मवधादावप्येतत् प्राय-श्चित्तमिति श्रद्धा त्वाश्चेति।

स्कान्दे—अद्य कृतैतदमुक-पाप-नाश-कामो गङ्गायां स्नानमहं करिष्ये। "यत्र गङ्गा महाराज प्रायश्चित्तन्तु तत्र मा।" इति वचना-

---

1. वचन is omitted in C. 2. C. व्यवहार्यं तु।

3. YajS., प्रायश्चित्त-प्रकरण, 4226, p. 34 v. r.…व्यवहार्यस्तु वचनादिह जायते। शूलपाणि in his PrāyV. 19, l. 3 f., accepts the reading both as कामतः as well as अकामतः and gives explanations in support of both the readings.

4. C. निरयं। PadmaP. न नरो नरकं याति। 5. C. यति।

6 PadmaP., स्वर्ग-खण्ड, p. 104, chap. 15, vv. 16-17, v. r. गङ्गाबिन्दभिषिक्तस्य न समा इति नः श्रुतम्।

7. C. वचनात्।

दित्यर्थः । महाभारते—अथ चान्द्रायण-व्रत-नाश्य-पाप-क्षय-कामो गङ्गायां स्नानमहं करिष्ये । एतत् स्नानं सर्वात्मना सर्व-भाव-शुद्धया कार्यम् । यदुक्तं प्रायश्चित्त-प्रकरणे पाद्मे[1]—"प्रायश्चित्तं चरेद् यस्तु वाङ्मनःकाय-कर्मणा । स प्राप्नोति शुभाल्लोकान् देव-गन्धर्व-सेवितान् ॥" एवं प्राजापत्य-व्रत-नाश्य-पराक-व्रत-नाश्य-पाप-क्षय-काम इति वाच्यम् ।

अन्यच्च,—गङ्गा-स्नानात् पापमेतद् यास्यतीति मत्वा अधर्म-मतिस्त्याज्या, यतोऽनया बुद्ध्या अधर्म-मात्रे णातीव पाप-सम्भवात् । तथा च पाद्मे—"न तीर्थे पातकं कुर्यान्न च तीर्थोप-जीवनम् । तीर्थे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥ दुर्जरं पातकं तीर्थे दुर्जरश्च प्रतिग्रहः । तीर्थेषु दुर्जरं सर्वमेतत् सर्वं (?) ततो व्रजेत्[2] ॥" यच्च उक्तं[3] ब्रह्माण्डे—

"अन्य-स्थाने कृतं पापं गङ्गा-स्नानाद्विनश्यति[4] ॥" एतत्तु प्रसङ्गात् सकृत्[5] कृत-पापे बोद्धव्यमिति तात्पर्यार्थः । एवं सर्व-पापमुद्दिश्य पाप-क्षयार्थं स्नायात् । श्रद्धा-भक्ति-पुरःसरमेव सर्वत्र विशेष-फलम् । अत एव श्रद्धा-भक्त्योर्विशेषत्वेनावश्यकता इति स्मृतिः । शास्त्रार्थे तथेति प्रत्ययः श्रद्धा । उपास्यतया निश्चयो भक्तिः कैश्चिदुपासनाप्युच्यते ।

---

1. C. पद्म-पुराणे । 2. PadmaP., स्वर्ग-खण्ड, chap. 15 p. 104, vv. 14-15, list line, तीर्थे च दुर्जरं सर्वमेतत्तथाचरन् व्रजेत् ।

3. C. यच्चोक्तं । 4. PrayT., chap. गङ्गा-माहात्म्य, p. 84, ll. 3-4, "अन्य-स्थाने कृतं पापं गङ्गा-तीरे विनश्यति । गङ्गा-तीरे कृतं पापं गङ्गा-स्नानात् प्रणश्यति", also PadmaP., p. 737, chap. 62, v. 38, v. r.···गङ्गा-स्नानेन नश्यति ।

5. सकृत् is omitted in C.

अथ कृत-कृत्य-प्रकरणम् ।

ब्राह्मे—"गङ्गां संस्मृत्य यस्तिष्ठेत्तस्य कार्यं न विद्यते । कृत-कृत्यः स वै मुक्तो जीवन्मुक्तो भवेन्नरः ॥ गङ्गा-मज्जन-शीलस्य गङ्गा-तीर-निवासिनः । अर्चां कृत्वा यथान्यायमश्व[1]-मेध-फलं लभेत् ॥" अश्वमेध-यज्ञ-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-तीर-निवासिनमहमर्चयिष्ये । गङ्गा-मज्जन-शीलस्यार्चनेऽप्येतदेव फलम् । एतत् केवल-गङ्गोपसेविनो बोद्धव्यम् ।

महाभारत-पाद्मयोः—"महापातक-मुख्यानि[2] यानि मे सन्ति जाह्नवि । गोविन्द-द्वादशीं प्राप्य तानि मे हर जाह्नवि[3] ॥"

एतच्च स्नान-पूर्वकं पवित्रः सन् निवेदयेत् । 'गोविन्द-द्वादशी' फाल्गुन-शुक्ल-द्वादशी ।

अथ मृत्यु-प्रकरणम् ।

स्कान्दे—"गङ्गायां मरणान्मुक्तिर्नात्र कार्या विचारणा । पर-ब्रह्म-स्वरूपिण्यामित्याह जगतां प्रभुः ॥ गङ्गायां त्यजतः प्राणान् कथयामि वरानने । कर्णे तत् परमं ब्रह्म ददामि मामकं पदम्[4] ॥" इति स्कान्द-पुराण-वचन-दर्शनात् "ज्ञानान्मुक्तिरि"ति सर्व-दर्शनाच्च[5] 'गङ्गायां मरणान्मुक्तिरि'ति "ज्ञानान्मुक्तिरि"ति[6] अविरोधी पदार्थः । यत्तु[7] पुराणान्तर-मृत्याऽन्यत्र[8] ब्रह्म-लोकादि-गमनं तत्तु कामनासु बोद्धव्यमिति ।

1. A. न्यायोऽश्वमेध । 2. A. संख्यानि ।
3. TithiT., chap. गोविन्द-द्वादशी, p. 342, ll. 12-13, v. r. महा-पातक-संज्ञानि यानि पापानि सन्ति मे ।
4. PrāyT., chap. गङ्गा-माहात्म्य, p. 82, 3-4.
5. A. सर्व-दर्शन-दर्शनाच्च ।
6. ज्ञानान्मुक्तिरिति is omitted in C.
7. C. यत्तु । 8. A. स्मृत्याद्यन्यत्र ।

पारस्करः, यच्च, "नाभुक्तं क्षीयते कर्म कल्प-कोटि-शतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥" अस्यायमर्थः— अधर्मादिकस्य भोगादेव क्षयो भवेत् । क्षय-कारणमेवात्र भोगः । अन्यथा ब्रह्म-वधादीनां प्रायश्चित्त-विधायक-धर्म[1]-शास्त्राणां वैयर्थ्यापत्तिः स्यात् ।

तथा—"ज्ञानाग्निः सर्व-कर्माणि भस्मसात् कुरुतेऽर्जुन ।" इति वाक्यैक-वाक्यतया गङ्गा-मरणान्मुक्तिरित्यविकल-पदार्थः । तथा च भविष्ये—"कृमि-कीट-पतङ्गाद्या ये मृता जाह्नवी-जले । कूलात् पतित-वृक्षाश्च तेऽपि यान्ति परां गतिम् ॥" "गङ्गायान्तु[2] जले मोक्ष" इति विष्णु-पुराणम् ।

स्कान्द-मात्स्ययोः—"ब्रह्मादि-देव-लोकानां मुक्तेश्च प्राप्ति-कारणम् । गङ्गैव परमो हेतुः कलि-काले विशेषतः ॥" भविष्ये—"गङ्गा-जल-स्वरूपेण तव ज्ञानं व्यवस्थितम् । तस्मात्तज्जल-सेवा तु कर्तव्या मोक्ष-काङ्क्षया ॥" ब्रह्माण्डे—"प्रसङ्गेनापि यैर्गङ्गा मोक्षदा त्ववगाहिता[3] ॥" भविष्येत्र—"ब्रह्म-विष्ण्वादि-देवानां लोकानाप्नोति मानवः । ज्ञाने भक्त्या तु गङ्गायां[4] मरणान्मोक्ष-

---

1. धर्म not found in C. 2. C. गङ्गायाश्च ।

"गङ्गायाश्च जले मोक्षो वाराणस्यां जले स्थले ।
अन्तरीक्षे च गङ्गायां गङ्गा-सागर-सङ्गमे ॥"

quoted in PrāyT., p. 81, ll, 2-4 ; v. r. गङ्गायाश्च ।

3. PrāyT., chap. गङ्गा-माहात्म्य, p. 82, ll. 7-8 "ब्रह्माण्डपुराणे ययोः", 1st. line of the verse "दृष्टा तु हरते पापं स्पृष्टा तु त्रिदिवं नयेत्" ; v. r. in the 2nd line, प्रसङ्गेनापि गङ्गा या… ।

4. C. ज्ञानेन भक्त्या गङ्गायां ।

माप्नुयात् ॥" पुरुषेच्छा[1]-कामनायामित्येषां लोकानाप्नोतीति विशेषः[2] ।

तथा—"या गतिर्योग-युक्तानां[3] या गतिर्योगिनामपि । ज्ञान-विज्ञान-निष्ठानां सा गङ्गायां मृतस्य च ॥ ज्ञानतोऽज्ञानतो वापि कामतोऽकामतोऽपि वा । गङ्गायान्तु मृतो मर्त्यो मोक्षं स्वर्गञ्च विन्दति ॥" इति-ब्रह्म-पुराण-वचन-[4]दर्शनाच्च पुरुषेच्छया[5] कामना-विशेषेषु स्वर्गादिरिति ।

ब्रह्माण्डे—गाङ्गेये[6] । "गङ्गायां ज्ञानतो मृत्वा मुक्तिमाप्नोति पूरुषः[7] । अज्ञानाद्ब्रह्म[8]-लोकन्तु याति नास्त्यत्र संशयः ॥" अज्ञानाद् गङ्गायां[9] कामनया[10] मरणात्, "कर्णे तत् परमं ब्रह्म कथयामि वरानने"[11] इति शिव-वचन-स्वरसादित्यर्थः । भविष्ये—"अपि योजन-पर्यन्ते गङ्गां स्मृत्वा तनुं त्यजेत् । वैवस्वतोऽपि तस्यार्घ्यं[12] दत्त्वा स्वर्गं प्रयच्छति ॥" गाङ्गेये—

"अर्घोदकेन गङ्गायां दर्शन-स्पर्शनादिभिः[13] । अर्घोदकेन[14]

---

1. C. पुरुषः ।
2. C. शेषः ।
3. C. युक्तानां ।
4. C. ब्रह्मपुराण वचनाच्च ।
5. A. पुरुषेच्छा ।
6. C. ब्रह्माण्ड-गाङ्गेये ।
7. C. मानवः । This verse is found in Pray T., chap. गङ्गा-माहात्म्य, p. 81, l. 1, v. r. 2nd line,...लोकञ्च ।
8. C. ब्रह्मणो लोकं ।
9. A. no गङ्गाया ।
10. A. कामनायां ।
11. PrayT., chap. गङ्गा-माहात्म्य, p. 82, ll. 3-4, "स्कन्द-पुराण" "गङ्गायां त्यजतः प्राणान् कथयामि वरानने । कर्णे तत् परमं ब्रह्म ददामि मामकं पदम् ॥"
12. C. दत्त्वार्घ्यं तस्य स्वर्गं ।
13. First part is omitted in C.
14. C. तु ।

गङ्गायां म्रियतेऽनशनेन यः॥ स याति न पुनर्जन्म ब्रह्म-सायुज्यमेति च[1]॥" अर्धोदके चरणान्नाभि-पर्यन्तम्[2]। 'अनशनेन' व्रतेन। कौर्मे—"यः सर्व-पाप-युक्तोऽपि[3] पुण्य-तीर्थेषु मानवः। नियमेन त्यजेत् प्राणान् मुच्यते सर्व-पातकैः[4]॥" 'नियमेन' संयतः[5] सन् भाव-शुद्ध्या सङ्कल्प-पूर्वकेणेत्यर्थः। एतत्तु न[6] गङ्गायां, दर्शन-स्पर्शनादिभिः पाप-क्षयात् पाप-क्षयार्थं मरण-संकल्पस्य वैयर्थ्यापत्तिः स्यात्। तस्मात् पाप-क्षय-कामनया स्नात्वा मरणेच्छा चेत् तदा यथेच्छ-कामनया तनुं त्यजेदिति सर्व-सम्मतोऽयं पक्षः।

नरसिंह-पुराणे—"जल-प्रवेशे चानन्दं प्रमोदं वह्नि-साहसे। भृगु-प्रपाते सौख्यन्तु[7] रणे चैवातिनिर्मलम्॥ अनशने मृतो यत्र स गच्छेत्तु त्रिविष्टपम्[8]। क्रतुयाजी नाक-पृष्ठमग्निहोत्री च निर्वृतिम्॥ तडाग-कूप-कर्ता च लभते पौष्टिकं द्विज। सुवर्ण-दाता[9] सौभाग्यं लभते तु महातपाः[10]॥ हिरण्य-गो-

---

1. C. मेव च। These last two lines are found in the Pray T., chap. गङ्गा-माहात्म्य, p. 82, ll. 1-2, "आग्नेये"; v. r. अर्धोदकेन जाह्नव्यां…। 2. अर्धोदक…पर्यन्तम् omitted in C.
3. C. मुक्तोऽपि। 4. S´uddhiT., p. 186, ll. 2-3.
5. A. संयुतः। 6. न is omited in C.
7. V. r. in Hemādri, CaturVC., दान-खण्ड, chap. 4 pp. 164-165, सौख्यं।
8. First three lines in S´uddhiT., p. 185, l. 6f. "दान-रत्नाकरे नरसिंह-पुराणम्"; v. r. वह्नि-साहसे…प्रपाते…अनशन-मृतो यः स्यात्। Catur VC., v. r. in last line, अनशने चाथ सन्न्यासे मृतो गच्छेत् त्रिपिष्टपम्॥
9. C. दायी। Also Hemadri.
10. C. समवाप्नुयात्। Hemadri, लभते स्वर्गं महातपाः। Here,

प्रदानेन[1] निरहङ्कारमाप्नुयात् । भू-दानेन तु शुद्धेन लभते शान्तिकं पदम् ॥ गो-प्रदानेन तु स्वर्गं लभते निर्मलं[2] नरः[3] । अन्न-दाने महा-पुण्यं[4] कन्या-दानेन मङ्गलम् ॥ द्विजेभ्यस्तर्पणं कृत्वा दत्त्वा वस्त्राणि भक्तितः[5] । श्वेतन्तु लभते स्वर्गं यत्र गत्वा[6] न शोचति ॥ कपिला-गो-प्रदानेन परमार्थे महीयते । एकान्न-भोजी यो मर्त्यो नक्त-[7] भोजी च नित्यशः । उपवास-त्रिरात्राद्यैः शान्तः स्वर्गं सुखी भवेत् ॥" 'एकान्न-भोजी' एक-भक्त-रतः[8] ॥

"सरित्स्नायी जित-क्रोधो ब्रह्मचारी दृढ-व्रतः । निर्मलं स्वर्ग-[9] माप्नोति तथा भूत-हिते रतः ॥ विद्या-दानेन मेधावी निरहङ्कारमाप्नुयात् । येन येन हि भावेन यद् यद् दानं प्रयच्छति[10]॥ तत्तत् स्वर्गमवाप्नोति यद् यदिच्छति मानवः । यस्तु दानानि सर्वाणि[11] ब्राह्मणेभ्यः प्रयच्छति ॥ न संप्राप्य निवर्तेत[12] दिवं शान्तमनामयम् । एक-विंशत्यमी स्वर्गा निविष्टा मेरु-

---

after this, there are two additional lines :—शीत-काले महाग्निं प्रज्वालयति यो नरः । सर्व-सत्त्व-हितार्थाय स स्वर्गेऽप्सरं लभेत् ।

1. Hemadri, भू-दानेन । 2. C. निर्मलं लभते ।

3. Hemadri, गो-प्रदानेन स्वर्गे निर्मलंतु लभते नरः ।

4. Op. cit., अन्न-दानेन पुण्याह्वं ।

5. C. शक्तितः । 6. C. गङ्गा ।

7. C. नक्तं । Catur VC., op. cit. उपवासी त्रिरात्राद्यैरन्ते स्वर्ग-सुखं लभेत् । 8. रत not found in C.

9. V. r. Hemadri, सुखम् ।

10. Add. r. in C—"तत्तु तेनैव भावेन प्राप्नोति प्रतिपूजितः" ।

11. C. सर्वाणि दानानि । Also in Hemadri.

12. C. निवर्तन्ते ; Hemadri, स प्राप्य न निवर्तेत दैवं··· ।

मूर्ध्नि ॥ अहिंसा-दान-कर्तारो यज्ञानां तपसां तथा। एतेषु ते निवसन्ति सज्जनाः क्रोध-वर्जिताः[1] ॥" एतत्तु सामान्य-जले, तीर्थादौ तु विशेषः।

अथास्थि-स्थिति-प्रकरणम्।

वैष्णवे—"शम्भोर्जटा-कलापात्तु विनिष्क्रान्ताऽस्थि-शर्कराः[2]। प्लावयित्वा दिवं निन्ये पापांस्तान्[3] सगरात्मजान्[4] ॥" विधिः ब्रह्माण्डे—"स्नात्वा तु सिक्ताऽप्यथ पञ्च-गव्यैर्हिरण्य-मध्वाज्य-तिलैः प्रयोज्य। ततस्तु मृत्-पिण्ड-पुटे निधाय पश्यन् दिशं प्रेत-गणोपगूढाम्[5] ॥ "नमोऽस्तु धर्म-राजाय" प्रविश्य निर्मलं जलम्। "यस्तु सर्व-हितो विष्णुः स मे प्रीत" इति[6] क्षिपेत् ॥ स्नात्वा तथोत्तीर्य च भास्करस्य दृष्ट्वा प्रदद्यादथ दक्षिणां तु। एवं कृते प्रेत-पुर-स्थितस्य स्वर्गे गतिः स्यात् स महेन्द्र-तुल्यः[7] ॥ गङ्गा-तोयेषु यस्यास्थि प्लवते शुभ-कर्मणः। न तस्य पुनरावृत्तिर्ब्रह्म-लोकात् कथञ्चन ॥"

---

1. Hemadri, एतेषु निवसन्ति स्म जनाः क्रोध-विवर्जिताः।
2. C. शर्करात्। 3. A. पापान् यान्।
4. VisnuP., part II, chap. 8, v. 10, p. 130, v. r.,··· पापाद्यान्।
5. Cp. PrāyT., p, 96, chap. गङ्गायामस्थि-प्रक्षेपः, स्नात्वा ततः पञ्च-गव्येन सिक्ता etc. The following three padas are just the same.
6. C. प्रीतोऽस्त्विति।
7. Op. cit., p. 95, v. r., last line; स्वर्गे स्थितिः स्याच्च महेन्द्र-तुल्या। Raghunandana says with regard to the 1st part of this verse that it is really a variant reading, found in the Tīrtha-cintāmaṇi, of the line of the Ādi-purāṇa, "उत्थाय भास्वन्तमवेक्ष्य सूर्यं स दक्षिणां विप्र-मुख्याय दद्यात्"।

अद्यामुकस्य ब्रह्म-लोकाधिकरणक-वासैतत्-पुराधिकरणक-पुनरावृत्त्यभाव-कामः अमुकस्य इदमस्थि गङ्गा-तोयेष्वहं विनिक्षिपामि। तथा—"दशाहाभ्यन्तरं यस्य गङ्गायामस्थि[1] मज्जति। गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात्[2] ॥" अद्यामुकस्य मरणाहे गङ्गा-मरण-जन्य-फल-सम-फल-प्राप्ति-कामोऽमुकस्य इदमस्थि गङ्गा-तोयेष्वहं निमज्जयिष्ये। एवं मरणाद्दशाहं यावत् फलम्, वाक्ये चैतावान् विशेषः—मरणाद्द-स्थाने द्वितीयाहे त्यादि वाक्यं कर्तव्यम्।

कौर्मे—"यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च। तावद्वर्ष-सहस्राणि स्वर्गलोके महीयते[3] ॥" अद्यामुकस्यैतन्निक्षेप्तव्यास्थि-खण्ड-सम-संख्य-वर्ष-सहस्रावच्छिन्न-स्वर्गाधिकरणक-महित्व-कामोऽमुकस्यैतान्यस्थि-खण्डानि गङ्गायामहं निक्षिपामि।

भविष्ये—"गङ्गा-तोयेषु यस्यास्थि नीत्वा संक्षिप्यते नरैः। युगानान्तु सहस्राणि तस्य स्वर्गे भवेत् स्थितिः ॥" अद्यामुकस्य बहु-युग-सहस्रावच्छिन्न-स्वर्गाधिकरणक-वास-कामोऽमुकस्येदमस्थि गङ्गा-तोयेष्वहं क्षिपामि।

ब्रह्माण्डे—"यस्मिन् काले नृणामस्थि गङ्गायां क्षिप्यते नरैः। तत्-कालमादितः कृत्वा तस्य स्वर्गे भवेत् स्थितिः ॥ तावद्युग-

1. C. गङ्गा-तोयेऽस्थि and PrayT., p. 97.

2. A. अवाप्यते। PrayT., chap. गङ्गायामस्थि-प्रक्षेपः, p. 97, ll. 3-4.

3. PrayT., pp. 96-97; PadmaP., सृष्टि-खण्ड, p. 738, chap. 62, v. 66; v. r. यावदस्थि मनुष्यस्य गङ्गा-तोये प्रतिष्ठति; also in स्वर्ग-खण्ड, chap. 21, v. 53, p. 152; v. r. तिष्ठन्ति तस्य देहिनः; and Mat P., chap. 106, v. 52, p. 318; v. r. तिष्ठन्ति हि शरीरिणः।

सहस्रन्तु नात्र कार्या विचारणा ॥" अद्यामुकस्य निक्षेप्स्यास्थि-सम-संख्य-युग-सहस्रावच्छिन्न-स्वर्ग-स्थिति-कामोऽमुकस्यैतान्यस्थि-खण्डानि गङ्गायामहं निक्षिपामि।

वन-पर्वणि—"यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम्। तावत् स पुरुषो राजन् स्वर्ग-लोके महीयते[1] ॥" अद्यामुकस्य गङ्गाधिकरणक-यावत् कालावच्छिन्न-तज्जल-संसर्ग-स्थिति-तावत्-काल-स्वर्ग-लोक-महितत्व-कामोऽमुकस्यैतदस्थि गङ्गायामहं निक्षिपामि[2]। गङ्गा-सागर-सङ्गमस्य। महाभारते—"गङ्गायास्त्वथ राजेन्द्र सागरस्य च सङ्गमे। अश्वमेधाद्दश-गुणं प्रवदन्ति मनीषिणः[3] ॥" अद्याश्वमेध-यज्ञ-जन्य-फल-दश-गुण-फल-कामो गङ्गा-सागर-सङ्गमे स्नानमहं करिष्ये ।

गाङ्गेये—"अन्तरीक्षे क्षितौ तोये पापीयानपि यो मृतः। हरि-ब्रह्म-शिवैः पूज्यं पदमक्षय्यमश्नुते[4] ॥" अद्य सर्व-पाप-क्षय-पूर्वक-हरि-ब्रह्म-शिव-पूजयाक्षय्य-पद-प्राप्ति-कामो गङ्गा-सागर-सङ्गमे तोये क्षितौ चान्तरीक्षे च प्राणानहं त्यक्ष्यामि। मुक्ति-प्राप्ति-कामो वा। पठन्ति च "जले स्थले चान्तरीक्षे गङ्गा-सागर-सङ्गमे ॥" इति।

स्कान्दे—"सर्व-तीर्थेषु यत् पुण्यं सर्व-दानेषु यद् भवेत्। पूजायाः[5] सर्व-देवानां तपसां यज्ञ-कर्मणाम् ॥ सर्व-पुण्या-

---

1. PadmaP., स्वर्ग-खण्ड, chap. 19, v. 169, p. 140.

2. A. स्नापयिष्ये।

3. PadmaP., स्वर्ग-खण्ड, p. 134, chap. 19, v. 78, v. r. 2nd line, अश्वमेधं दश-गुणं …।

4. Cp. PrayT., chap. गङ्गा-माहात्म्य, p. 81, ll. 2-4.

5. C. पूजायां।

चमाणाञ्च यत् पुण्यं सम्प्रजायते। दर्शनात् स्पर्शनात् पानात् स्नानाद्वै वावगाहनात्। लभते पुरुषः सर्वं कृत्वा सागर-सङ्गमे ॥" अथ सर्व-तीर्थ-जन्य-पुण्य-सर्व-दान-सर्व-देव-पूजा-सर्व-तपः-सर्व-यज्ञ-सर्व-पुण्याश्रम-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामो गङ्गा-सागर-सङ्गमे स्नानमहं करिष्ये। दर्शन-स्पर्शन-पानावगाह[1]नाना-मन्यतम-करणेऽप्येतदेव फलम्।

ब्राह्मे—"यो यमर्थयते कामं पुरुषः काम-मोहितः। मरणा-ल्लभते सर्वं गङ्गा-सागर-सङ्गमे ॥" अद्यामुक-प्राप्ति-कामो गङ्गा-सागर-सङ्गमे मरणमहं करिष्ये।

स्कान्दे शिव-वाक्यम्—"मुक्ति-क्षेत्रेषु सर्वत्र काम्य-मृत्यु-र्विधीयते। सर्वत्र लभते कामं मरणान्नात्र संशयः ॥" पाद्मे प्रयाग-प्रकरणे—"यत्र यत्र भवेन्मुक्तिर्मरणादुच्यते विधिः। तत्रैव लभते काम्यं[2] मरणात् कामतो नरः ॥ ब्रह्मत्वं वैष्णवत्वं वा सुरेशत्वं विशांवर। शिवत्वं लभते[3] सत्यमन्यस्य का कथा तयोः ॥ रमते यस्य या यत्र बुद्धिः कामेषु कर्मणाम्। मरणात्त-दवाप्नोति शुद्धात्मा काम्यमीप्सितम् ॥" इति दर्शनाद् यत्र[4] मरणा-न्मुक्तिः प्रतिपादिता, तत्रैव कामयेदित्यर्थः। एतेन स्वभाव-मरणान्मुक्तिः पुरुषेच्छा-कामनास्वेव विशेषोऽवगमनीयः।

अथ प्रयागस्य। पाद्मे—"स्वर्ण-भार-सहस्रेण कुरुक्षेत्रे रवि-ग्रहे। यत् फलं लभते माघे वेण्यां तत्[5] दिने दिने[6] ॥"

---

1. C. स्नानावगाह। 2. C. कामी।
3. A. चालभेत्। 4. A. यत्र। 5. C. तत्र।
6. PadmaP., उत्तर-खण्ड, 127. 40, p. 457 ; v. r. वेण्याः स्नानाद्दिने दिने ; ASS., p. 1769, v. r. वेण्यां तस्य दिन-त्रये।

अद्य प्रतिदिनं कुरुक्षेत्राधिकरणक-रवि-ग्रह-कालीन-स्वर्ण-भार-सहस्र-दान-जन्य-फल-सम-फल-प्राप्ति-कामो माघे प्रत्यहं प्रयागे वेण्यां स्नानमहं करिष्ये। एक-दिवस-स्नाने तु माघ-पदमपनीय द्व्यह्निनानौति योजयेदिति।

तथा "राजसूय-सहस्रस्य राजन्नविकलं[1] फलम्। सितासितेषु माघेषु स्नातानां भवति ध्रुवम्[2] ॥" अद्याविकल-राजसूय-सहस्र-जन्य[3]-फलाविकल-[ फल ]-प्राप्ति-कामो माघे मासि सितासिते प्रातः स्नानमहं करिष्ये।

"गङ्गा-यमुनयोर्मध्ये स्नात्वा[4] मुच्येत किल्बिषात्। मनसा चिन्तितान् कामांस्तदाप्नोति [सु]पुष्कलान् ॥" अद्य किल्बिष-नाश-पूर्वक-मनोवाञ्छित-बहु-पुष्कल-कामावाप्ति-कामो गङ्गा-यमुनयोर्मध्ये प्रातः स्नानमहं करिष्ये। तथा—"सितासितेषु यः स्नाति माघे मासि युधिष्ठिर। न तस्य पुनरावृत्तिः कल्प-कोटि-शतैरपि[5] ॥" अद्य स्वर्गाधिकरणक-बहु-कल्प-कोटि-शतावच्छिन्न-वासैतल्लोकाधिकरणक-पुनः-पाताभाव-कामो माघे मासि सितासिते प्रातः स्नानमहं करिष्ये।

पाद्मे—"आकल्प-जन्मभिः पापं सञ्चितं यन्नरैर्नृप। तद्भवेद् भस्मसान्माघे स्नातानान्तु सितासिते[6] ॥" अद्याकल्प-जन्म-

1. A. विपुलं।

2. PadmaP., उत्तर-खण्ड, 127. 41, p. 457, Cal. ed. v. r. सितासिते तु माघे च ; ASS. p. 1769, v. r. सितासितेषु माघे तत्।

जन्य is omitted in C. 4. C. स्नातो।

5. MalaMT., part 1, chap. माघ-स्नान, p. 85, "मार्कण्डेय-पुराण", v. r. सितासितेषु यत् स्नानं··· न तेषां पुनरावृत्तिः···।

6. Op. cit., 127. 44, p. 457, Cal. ed., v. r. आकल्प-सञ्चितं

सञ्चित-पाप-चय-कामो माघे मासि सितासिते प्रातः स्नानमहं करिष्ये। तथा, "सितासितेषु यो मज्जेदपि पाप-शताहतः। मकरस्थे रवौ माघे न स गर्भेषु मज्जति॥ दुर्वारा वैष्णवी माया देवैरपि सुदुस्त्यजा। प्रयागे दह्यते सा तु माघे मासि नराधिप॥ तेजोमयेषु लोकेषु भुक्त्वा भोगाननेकशः। पश्चाच्चक्रिणि लीयन्ते प्रयागे माघ-मज्जनात्[1]॥"

अथ पाप-शत-नाश-पूर्वक-मातृ-गर्भ-मज्जनाभाव-दुस्त्यज-दुर्वार-वैष्णव-माया-दाह-पूर्वक-तेजोमय-बहु-लोकाधिकरणकानेकशोबहु-भोगोत्तर[2]-चक्रि-लीनत्व[3]-कामो माघे मासि सितासिते प्रातर्मज्जनमहं करिष्ये।

तथा,—"संवत्सर-शतं साग्रं[4] निराहारस्य यत् फलम्। प्रयागे माघ-मासस्य[5] त्र्यह-स्नानस्य तत् फलम्[6]॥ अथ साग्र-संवत्सर-शत-निराहार-जन्य-फल-सम-फल-प्राप्ति-कामो माघे मासि प्रयागे प्रातस्त्र्यह-स्नानमहं करिष्ये।

तथा—"योगाभ्यासेन यत् पुण्यं संवत्सर-शतैर्भवेत्। प्रयागे

---

पापं जन्मभिर्यच्चरेन्नृप…स्नातानाञ्च…। ASS. 1779, v. r., बाकल्य-सञ्चितं पापं जन्मभिर्यन्नराधिप।

1. Op. cit, Cal. ed., p. 456, सितासिते जले मज्जेदपि पाप-शतान्वितः।...नैव गर्भेषु…दुस्तरा वैष्णवी…सुदुर्जया…। ASS., P. 1769, सितासिते तु यो मज्जेदपि…रवौ राजन्…दुर्जया वैष्णवी… दह्यते सापि…।

2. C. भोगोपभोगोत्तर। 3. A. चक्रिकि(?) लीनत्व।

4. C. साग्रं। Also PadmaP. उत्तर-खण्ड, Cal. ed., p. 457 and ASS., p. 1769. 5. C. मासे तु।

6. Cp. PadmaP., स्वर्ग-खण्ड, chap. 21, p. 153, v. 66, v. r., "प्रयागे माघ-मासे तु त्र्यहं स्नातस्य तत् फलम्।"

माघ-मासे तु ब्रह्म-स्नानस्य तत् फलम्[1] ॥" अद्य बहु-संवत्सर-शत-योगाभ्यास-जन्य-फल-सम-फल-प्राप्ति-कामो माघे मासि प्रयागे प्रातस्त्र्यहं स्नानमहं करिष्ये। वन-पर्वणि—"ततः पुण्यतमं नाम त्रिषु लोकेषु भारत। प्रयागः सर्व-तीर्थेभ्यः प्रभवत्यधिकं विभो॥ श्रवणात्तस्य तीर्थस्य नाम-संकीर्तनादपि। मृत्तिका-लेपनाद्वापि नरः पापात् प्रमुच्यते[2] ॥" अद्य पाप-प्रमोचन[3]-कामः प्रयाग-नाम-संकीर्तनमहं करिष्ये। श्रवण-मृत्तिका-लेपनयोरेकतरस्य करणेऽप्ये तदेव फलम्।

तथा—"प्रयागमनुगच्छेत्तु वसेद्वापि हि यो नरः। संत्यक्त[4]-पापः शुद्धात्मा ब्रह्म-लोकं स गच्छति॥" अद्य[5]-पाप-क्षय-पूर्वक-ब्रह्म-लोक-गमन-कामः प्रयाग-वासमहं करिष्ये। मात्स्ये—"प्रयागे वा भवेन्मुक्तिरिह वास-परिग्रहात्। प्रयागादपि तीर्थाग्र्यादियं काशी विशिष्यते॥" अद्य मुक्ति-प्राप्ति-कामः प्रयागे स्नानमहं करिष्ये।

पाद्मे—"कुरुक्षेत्र-समा गङ्गा यत्र तत्रावगाहिता। तस्माद्दश-गुणा प्रोक्ता यत्र विन्ध्येन सङ्गता[6] ॥ तस्माच्छत-गुणा प्रोक्ता[7]

---

1. Not traced in the Cal. ed.; ASS., p. 1769, v. 44.

2. MahBh., 3. 85. 79-80, p. 146, v. r. प्रयागं सर्व-तीर्थेभ्यः प्रवदन्त्यधिकं··· ।···गमनात्तस्य तीर्थस्य···कृत-काल-भयाद्वापि नरः··· ।

3. C. मोचन। 4. C. स त्यक्त 5. Add. r. C. सर्व।

6. PadmaP., उत्तर-खण्ड, 127. 47-49, Pp. 457-458; v. r.··· यत्र कुत्रावगाहिता···दश-गुणा पुण्या। Cp. PadmaP., स्वर्ग-खण्ड, chap. 19, v. 162, p. 139; chap. 21, v. 50, p. 152, v. r.,···गङ्गा यत्र तत्रावगाह्यते। कुरुक्षेत्राद्दश-गुणा यत्र विन्ध्य-समागता॥ 7. Op. cit., v. r., गङ्गा।

काश्यामुत्तर-वाहिनी । काश्याः शत-गुणा प्रोक्ता गङ्गा-यमुन-सङ्गमे ॥ सहस्र-गुणिता सापि[1] भवेत् पश्चिम-वाहिनी । सा राजन् दर्शनादेव[2] ब्रह्म-हत्यापहारिणी ॥" अद्य काश्याधिकरणकोत्तर-वाहिनी-गङ्गा-स्नान-जन्य-फल-शत-गुण-फल-प्राप्ति-कामो गङ्गा-यमुन-सङ्गमे माघे मासि प्रातः-स्नानमहं करिष्ये । एतस्या दर्शने ब्रह्म-हत्या-हरणं फलम्[3] ।

तथा—"पश्चिमाभिमुखी गङ्गा कालिन्द्या सह सङ्गता । हन्ति कल्प-कृतं[4] पापं सा माघे नृप दुर्लभा[5] ॥" अद्य कालिन्दी-सह-सङ्गत-पश्चिमाभिमुखी-गङ्गायां कल्प-कृत-पाप-क्षय-कामो माघे प्रातः स्नानमहं करिष्ये । तथा—"प्रयागे माघ-मासे तु त्र्यहं स्नानस्य[6] यद्भवेत् । नाश्वमेध[7]-सहस्रेण तत् पुण्यं[8] लभते भुवि ॥" अद्याश्वमेध-सहस्र-जन्य[9]-फल-सम-फल-प्राप्ति-कामो माघे मासि प्रयागेऽद्यारभ्य प्रातस्त्र्यहं स्नानमहं करिष्ये । तथा—"उपस्पृशति यो माघे मकरस्थे सितासिते । तस्य पुण्यस्य संख्यां नो चित्रगुप्तोऽपि वेत्त्यलम्[10] ॥" अद्य चित्रगुप्तासंख्यात-पुण्य-प्राप्ति-कामो माघे मासि सितासिते जल-स्पर्शमहं करिष्ये ।

---

1. Op. cit., v. r., सा सहस्र-गुणा तासां... ।
2. Op. cit, v. r. या राजन् । C. स्पर्शनादेव ।
3. A. हरण-काम: फलम् । 4. A. कल्प-शतं ।
5. C. नृप-वल्लभा । PadmaP., उत्तर-खण्ड, 127, 50, p. 458 ; v. r. या पश्चाद्वाहिनी गङ्गा...हन्ति कोटि-कृतं··· ।
6. C. स्नातस्य । Op. cit., 127. 56, p. 458 ; v. r. त्र्यह-स्नातस्य । 7. A. यज्ञमेध ।
8. Op. cit., v. r. तत् फलं··· । 9. C. यज्ञ-जन्य ।
10. Op. cit., p. 457, v. 37, v. r. मकरार्के··· । न तत्-पुण्यस्य संख्यास्तु... ।

तथा "वाङ्मनः-कायजं पापं नरस्य सुदृढं व्रजेत्। प्रयागे माघ-मासे तु त्र्यह-स्नानात्र संशयः[1] ॥" [2]अत्र वाचिक-मानसिक-कायिक-पाप-नाश-कामो माघे मासि प्रयागे प्रातस्त्र्यहं स्नानमहं करिष्ये। ब्रह्माण्डे[2]—"माघ-मासे तु यः स्नाति सिता-सित-दिन-त्रये[3]। न तस्य पुनरावृत्तिः कल्प-कोटि-शतैरपि ॥" अत्र बहु[4]कल्प-कोटि-शतावच्छिन्न-स्वर्ग-[5]वासैतत्-पुराधिकरणक-परिवर्ताभाव-कामो माघे मासि सितासितेऽदारभ्य दिन-त्रयं प्रयागे प्रातः स्नानमहं करिष्ये। वन-पर्वणि—"प्रयागः सर्व-तीर्थेभ्यः प्रभवत्यधिकं विभो ॥" अत्र सर्व-तीर्थ-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामो माघे मासि प्रयागे प्रातः स्नानमहं करिष्ये। प्रकरण-बलात् सर्वत्र यथायोगं फलं गृह्णीयात्।

पाद्मे—"ये माघ-मासे वर-तीर्थ-मज्जनं कुर्वन्ति चार्धोदित-सूर्य-मण्डले। स्नात्वा तु माघे हरिमर्चयन्ति ये स्वर्गं च्युता भूपतयो भवन्ति ते ॥ भव्य-स्वरूपाः सुभगाः प्रियंवदा धर्मान्विता भूरि-धनाः शतायुषः[6] ॥" 'वर-तीर्थं' प्रयागे।

अत्र स्वर्गाधिक-शाक[7]-वास-च्युतानन्तर-भूपतित्व-भव्य[8]-

1. PadmaP., उत्तर-खण्ड, 27. 45, p. 457 v. r.,...नरस्य विलयं व्रजेत्...त्र्यह स्नातस्य निश्चितम् ॥ ASS, p. 1769,...सुदृढं भवेत्...त्र्यह-स्नानेन तत्-क्षयः ॥ 2-2. Not found in C.

3. C. दिन-त्रयं सितासिते। 4. बहु not found in C.

5. स्वर्ग not found in C.

6 Op. cit., 28. 10(b) 11, p, 468, Cal. ed., v. r. स्नात्वा च। Ass., 1776, vv. 10(b) and 11; v. r. स्नात्वा हि...भव्याः सुरूपाः। 7. C. स्वर्ग-वासाधिकरणक।

8. भव्य omitted in C.

स्वरूपत्व-सुभगत्व[1]-प्रियंवदत्व-धर्मान्वितत्व-भूरि-धनत्व-शतायुष्ट्व-भवन-कामो माघे मासि वर-तीर्थ-प्रयागे[2] अर्धोदित-सूर्य-मण्डले स्नानमहं करिष्ये। स्नात्वा हरिं पूजयेत्।

तथा प्रातः स्नानमात्रं च—अद्य जगति महाराजत्व-भवन-कामो गङ्गा-यमुन-सङ्गमे मकर-भास्करोदये स्नानमहं करिष्ये[3]।

तथा—"विन्दन्ति कामिनः कामान् मुक्तिं यान्ति मुमुक्षवः। सिद्धिञ्च साधका यान्ति प्रयागेऽस्मिन् द्विजोत्तम॥" अद्य वञ्छीप्सित-काम-प्राप्ति-कामो माघे[4] प्रयागे प्रातः स्नानमहं करिष्ये। मुक्ति-प्राप्ति-कामो वा।

तथा—"सप्त-जन्म-कृतं पापं वर्तमानञ्च पातकम्। माघ-स्नानं दहेत् सर्वं पुण्य-तीर्थे विशेषतः॥ प्रायश्चित्तं न पश्यन्ति यस्मिन् पापे मुनीश्वराः[5]। पातकं पुण्य-तीर्थेषु नश्येत्तदपि माघतः[6]॥" पुण्य-तीर्थान्याह—

पाद्मे—"हिमवत्-पृष्ठ-तीर्थेषु सर्व-पाप-प्रणाशनः। इन्द्र-लोक-प्रदो माघो[7] निर्दिष्टो वेद-वादिभिः॥ सर्व-काम-फलो माघो मोक्षदो[8] बदरी-वने[9]। पापघ्नो दुःख-हारी च सर्व-काम-

1. सुभगत्व omitted in C. 2. C. प्रयागे वर-तीर्थे।

3. तथा—...करिष्ये is omitted in C.

4. Add. r. C. मासि। 5. C. सुरासुराः।

6. PadmaP., उत्तर-खण्ड, 128. 132-133, p. 477, Cal. ed.; ASS., p. 1782, ...दहेत् कृत्स्नं...।

7. PadmaP., उत्तर-खण्ड, Cal. ed., 128. 134f., p, 477f.; ASS., p. 1782f., v. r. इन्द्रलोकप्रदोऽक्षोहि...।

8. ASS., सर्व-काम-प्रदो माघो मोक्षकृत्...; Cal. ed. सर्व-पापहरो माघो...।

9. C. बदरी-वने।

फल-प्रदः ॥ रुद्र-लोक-प्रदो माघो नार्मदः[1] पाप-नाशनः । यामुनः सूर्य-लोकाय भवेत् कल्मष-घातकः[2] ॥ सारस्वतोऽघ[4]-विध्वंसी ब्रह्म-लोक-फलस्तथा[3] । विशाल-फलदो माघो विशालायां द्विजोत्तम ॥ पापेन्धन-दवाग्निस्तु सर्व-पाप-क्षयावहः[4] । विष्णु-लोकाय मोक्षाय जाह्नवः परिकीर्तितः[5] ॥ सरयूर्गण्डकी सिन्धुश्चन्द्रभागा च कौशिकी । तापी गोदावरी भीमा पयोष्णी कृतवेणिका[6] ॥ कावेरी तुङ्ग-भद्रा च अन्याश्चापि समुद्रगाः[7] । तासु माघे[8] नरो याति स्वर्ग-लोकं विकिल्बिषः[9] ॥ नैमिषे विष्णु-सारूप्यं[10] पुष्करे ब्रह्मणोऽन्तिकम् । आखण्डलस्य लोके हि रुद्र-क्षेत्रेषु[11] माघतः ॥ माघो देव-ह्रदे देव[12]-योग-सिद्धि[13]-फल-प्रदः । प्रभासे मकरादौ च माघे रुद्र-गणो भवेत्[14] ॥ देवक्यां देवता-देहो गोमत्यां न पुनर्भवेत्[15] । हेम-कूटे महाकाले

1. A. नार्मजः ।

2. V. r. in ASS. as well as Cal. ed., कलुष-नाशनः ।

3. A. फलस्तथा । Cal. ed., ब्रह्म-लोक-फल-प्रदः ; ASS., ब्रह्म-लोकप्रदस्तथा ।

4. A. क्रियापहः । Cal. ed. and ASS. पातकेन्धन-दावाग्निर्मैत्रेतु-क्रियापहः ।

5. ASS. जाह्नवी परिकीर्तिता ।

6. ASS. and Cal. ed, कृष्णवेणिका ।

7. Cal. ed. अन्या याश्च समुद्रगाः ; ASS., याश्चान्याश्च समुद्रगाः ।

8. C. माघी ; Also PadmaP.

9. PadmaP., विकल्मषः । 10. C. सायुज्यं । Also PadmaP.

11. PadmaP. Cal. ed कुरुक्षेत्रे तु ; ASS. कुरुक्षेत्रे तु ।

12. Op. cit., विप्र । 13. C. शुद्धि ।

14. Op. cit. प्रभासे मकरादित्ये स्नानाद्रुद्र-गणो भवेत् ।

15. Op. cit., देवक्यां देवता-देहो नरो भवति माघतः । माघ-स्नानेन भो विप्र गोमत्यां न पुनर्भवः ।

ॐकारे मकरे तथा ॥ नील-काष्ठार्बुदे माघे रुद्र[1]-लोके महीयते । सर्वांसां सरितां विप्र संभेदे मकरे रवौ ॥ स्नानेन सर्व-कामानामवाप्तिर्जायते नृणाम् । माघस्तु प्राप्यते पुण्यैः प्रयागे द्विज-सत्तम ॥"

"पुनर्भवं नात्र सितासितं जलं[2] गायन्ति देवाः सततं दिवि स्थिताः[3] । माघः प्रयागे किल नो भविष्यति[4] स्नाता नरा[5] यत्र न गर्भ-वेदनाम् ॥ पश्यन्ति तिष्ठन्ति च[6] विष्णु-सन्निधौ[7] मज्जन्ति येऽपि त्वरचमत्र मानवाः[8] । तीर्थे प्रयागे बहु-पाप-कञ्चुका मज्जन्ति[9] ते नो निरयेषु धर्मतः[10] ॥ स्वर्गेषु ते चारु चरन्ति देवव-

1. C. माघाद्रुद्र ।

2. Op. cit., Cal. ed., अपुनर्भवदं तत्र सितासित-जलं यतः ; सितासित-जलं किल in ASS. This second line of v. 147 of the printed eds. in the anuṣṭubh metre has been converted in the Gaṅgā-vākyavalī into an Upajati foot (pada), and therefore the arrangement of the verses is quite different here. The readings in the printed eds. are better.

3. Op. cit , Cal. ed., दिविस्थाः ; ASS. दिविष्ठाः ।

4. C. माघे प्रयागे किल नो भविष्याः ।

5. Op. cit., Cal. ed., स्नानाचरा—।

6. Op. cit, ASS. तिष्ठन्त्यपि ।

7. Here ends the first verse in the printed eds. of the PadmaP. ; Cal. ed., p. 478 ; ASS., p. 1782.

8. C. त्वरचमम्भसा नराः ।

9. A. मज्जन्तु । Also Padma P., Cal. ed., उत्तर-खण्ड, व्रजन्ति ।

10. Op. cit. Cal. ed. and ASS. धर्मिणः ।

तीर्थैश्चैतैर्दान-तपोभिरध्वरैः । माघे विधात्रा तुलया धृतः पुरा[1] माघ-प्रयागस्तु[2] तयोर्द्वयोरभूत् ॥ माघो गरीयान् अत एव सोऽधिको स्नाताम्बु-पर्याप्लुत-देह-शोधनैः[3] । तपोभिरुग्रैश्चिर-काल-वाञ्छितै[4]र्योगै रलं यान्ति नरास्तु तां गतिम्[5] ॥ स्नानात् प्रयागस्य हि यां गतिं स्थिरां[6] स्नाताश्च ये माकर-भास्करोदये[7] । तीर्थं प्रयागे सुर-सिन्धु-सङ्गमे तेषां कण्ठ-हारमलंकरोति[8] ॥ मुक्तावली कुञ्जर-कर्णतालिका[9] यो राजसूयाश्वमेध-[10]यज्ञतः । स्नानात् फलं संप्रददाति चाधिकं पापानि सर्वाणि विलुप्य[11] लीलया[12] ॥"

1. Cal. ed., धृतं पुरः ।
2. Op. cit., Cal. ed, माघे प्रयागस्य ; ASS, माघ-प्रयागस्य ।
3. ASS. and Cal. ed., शोधनैः ।
4. Op. cit., वाञ्छितैः ।
5. Cal. ed., यौगैश्च संयान्ति नरा न तां गतिम् ; ASS., योगैर्न संयान्ति नराः सतां गतिम् ।
6. Cal. ed., स्नानेन माघस्य हि यान्ति यां गतिम् ; ASS., स्नानात् प्रयागस्य च याति ( ? ) यां गतिम् ;
7. ASS. स्नाताश्च ये वै मृग-भास्करोदये ।
8. ASS. and Cal. ed. : Add. r. स्विं after मलंकरोति ।
9. Op. cit., कुञ्जर-कर्ण-ताडिता ।
10. Op. cit., राजसूयाश्वमेध । 11. Op. cit., विलोप्य ।
12. After पापानि सर्वाणि विलोप्य लीलया, there is the reading धूनं प्रयागः स कथं न सेव्यते in Cal. ed. ;···न वर्ण्यते in ASS.

It is interesting to note here that almost indentical verses are found in the Svarga-khaṇḍa of the Padma-

"कलिन्द-कन्या-सुर-सिन्धु-योगः श्रीमान् प्रयागः स हि तीर्थ-राजः। गङ्गा हि सर्वत्र सदा सुरेश्वरी मोक्ष-प्रदा काम-प्रदा च कामिनाम्॥ माघे विशेषात् फलभागिनी सा तत्रापि कामोक्षमति त्वशेषान्। अतीव पुण्या भवतीह सङ्गमे कलिन्द-कन्या-सह सिन्धु-विश्रुतः॥ एवं संचिन्त्य हृदये कुर्यात्स्नाने निमज्जनम्। यत्र तत्र जले वापि तीर्थेषु च विशेषतः[1]॥"

अत एव येषां येषां या याः कामनास्तास्ता अभिलष्य ते ते स्नायुः। "विन्दन्ति कामिनः कामान् मुक्तिं यान्ति मुमुक्षवः[2]।" इति विशेष-वचन-दर्शनात्।

तथा—"अत्र नारायणः सप्ततो पत्नी-कामः सितासिते। तदैव[3] लब्धवांल्लक्ष्मीं भार्याममृत-मन्थने॥ उषित्वाऽत्रैव षण्मासान्[4] स्नात्वा वेण्यां यथेच्छया। त्रिपुरं पातयामास एक-बाणेन शङ्करः[5]॥ पुरुषं शंकरं लेभे ययातिर्नाहुषो मुने। पुत्र-कामः प्रयागे हि स्नात्वा पुण्ये सितासिते॥ धन-कामः पुरा शक्रः स्नातो

---

purāṇa, Cal. ed., (p. 72, vv. 135-137) in connection with description of the river Revā (i. e. Nerbuda).

1. These verses are not traced in the printed eds. of the Padma-purāṇa.

2. PadmaP., उत्तर-खण्ड, 129. 283, p. 507.

3. PapmaP., उत्तर-खण्ड, 129. 64f., Cal. ed., अत्र स।

4. Op. cit., Cal. ed., षण्मासं।

5. Op, cit., Cal. ed., त्रिपुरं घातयामास त्रिशूलेन त्रिशूलभृत्। The Gaṅgā-vākyāvalī omits many verses after this and before पुरुषं शङ्करं लेभे, etc.

स्नात्व[1] द्विजोत्तम। धनदस्य निधीन् सर्वांस्तञ्जहार स्वमायया[2]॥ ऋचीकेन पुरा शप्तो[3] गन्धर्वो वायसोऽभवत्। शापं मुमोच सोऽत्रैव स्नातः सद्यः सितासिते॥ वासवस्य तु शापेन स्वर्ग-भ्रष्टा पुरोर्वशी[4]। स्वर्ग-कामाऽत्र सस्नौ सा[5] लेभे स्वर्गं ततोऽचिरात्॥" इति संक्षेपः। काम्य-मरण-व्यवस्था तु मङ्गल-प्रकरण एव लिखिता। प्रयागे काम्य-मरणन्तु ब्राह्मणेतर-सर्व-वर्णेन चाण्डालान्तेन कर्त्तव्यमिति।

मात्स्ये—"संवत्सर-शतं साग्रं निराहारस्य यत् फलम्। प्रयागे माघ-मासे तु त्र्यह-स्नातस्य तत् फलम्॥" अद्य साग्र-संवत्सर-शतावच्छिन्नोपवास-जन्य-फल-सम-फल-प्राप्ति-कामोऽद्यादि प्रयागे त्र्यह-स्नानमहं करिष्ये। एतेषान्तु त्र्यह-स्नान-फलत्वे विकल्पो योग-सिद्धि-न्यायात्। परिग्रहस्त्वैच्छिक एव विनिगमकाभावात्। यत्तु त्र्यह-संकल्प-क्रोडीकृतोऽपि (?) माघ-सप्तमी-प्रातःस्नानादसाधारण-संकल्पेन पुनस्तदैव स्नानाचरणं तदयुक्तं, तदा सकृत् स्नानस्यैव विहितत्वात्। अन्यथा तत्त्र्यह[6]-फल-कामनया तदन्यत्वापत्तेः[7]। कथं तर्हि दिवा नाना-तीर्थ-लाभे स्नानावृत्तिः[8], विशेष-वचनादिति प्राहुः[9]। सङ्कल्पस्तु प्रातःस्नान-मात्र-विषय इति शिष्टाः॥

1. Op. cit., सुस्नातोऽत्र।
2. Op. cit., जहार स च लीलया।
3. Op. cit., शप्तः। 4. Op. cit., स्वर्गाद्भ्रष्टाऽप्सरोर्वशी।
5. Op. cit., स्वर्ग-कामा च सा सस्नौ।
6. C. त्र्यह। 7. C. तदान्यापत्तेः
8. A स्नान-वृद्धिः। 9. A. ब्रह

भविष्ये—"गङ्गा-यमुनयोश्चैव सङ्गमो लोक-विश्रुतः। स एव कामिकं तीर्थं तत्र स्नानेन भक्तितः॥ यस्य यस्य हि यः कामस्तस्य तस्य भवेद्धि सः। भोग-कामस्य भोगाः स्युः स्याद्राज्यं वासकामिनः॥ स्वर्गः स्यात् स्वर्ग-कामस्य मोक्षः स्यान्मोक्ष-कामिनः। काम-प्रदानि तीर्थानि त्रैलोक्ये यानि कानि च। तानि सर्वाणि सेवन्ते गङ्गा-यमुन-सङ्गमे॥ गङ्गा-द्वारे प्रयागे च गङ्गा-सागर-सङ्गमे। स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत्॥"

पाद्मे—"पञ्च-योजन-विस्तीर्णं प्रयागस्य तु मण्डलम्। प्रविशादस्य भूमौ तु अश्वमेधः पदे पदे[1]॥" तथा—"त्रीणि कुण्डानि राजेन्द्र तेषां मध्ये तु जाह्नवी। प्रयागस्य प्रवेशेन पापं नश्यति तत्-क्षणात्[2]॥ 'त्रीणी'ति, एकं प्रयाग-नगरे। द्वितीयं प्रतिष्ठान-नगरे[3]। तृतीयं यमुना-दक्षिणे अलर्क-नगरे। 'कुण्डानि' कूपा इत्यर्थः।

"धनुर्विंशति-विस्तीर्णे सित-नीलाम्बु-सङ्गमे। माघाद-पुनरावृत्तौ राजसूयो भवेत्ततः॥" तथा महाभारते—"सितासिते तु यः स्नाति माघे मासि युधिष्ठिर। न तेषां पुनरावृत्तिः कल्प-कोटि-शतैरपि[4]॥" अथ स्वर्गाधिकरणक-बहु-कल्प-कोटि-शतावच्छिन्न-वास-तत्-पुराधिकरणक-पुनःपाताभाव-कामो माघे

1. PadmaP., स्वर्ग-खण्ड, chap. 22, v. 8, p. 154; v. r. second line, संप्रविष्टस्य तद्भूमावश्वमेधः पदे पदे।

2. Op. cit., chap. 20, v. 55, p. 55, p. 146; v. r. पञ्च कुण्डानि···। 3. C. प्रतिष्ठा-नगरे।

4. MalaMT., part 1, p. 85, ll. 5–6, "मार्कण्डेय-पुराणम्"।

मासि सितासिते स्नानमद्य करिष्ये। अत् च[1] प्रातः स्नानमरुणोदय-वेलायाम्, प्रातःस्नाय्यरुण-किरण-ग्रस्तां प्राचीमवलोक्य स्नायादि"ति विष्णु-वचनात्[2]। यत्तु "माकर-भास्करोदये[3]" इत्यादि वाक्य-श्रवणात् सूर्योदय-कालेऽपि प्रयागे प्रातः स्नानमिति तन्न, तस्य फल-मात्र-विधायकत्वेन[4] कालाविधायकत्वात्। सामीप्य-लक्षणया च[5] एक-वाक्यत्वं सम्भवति वाक्यभेदस्यान्याय्यत्वात्[6]। "मकरस्थे रवौ माघे न स्नात्यनुदिते रवौ। कथं पापैः प्रमुच्येत कथं वा त्रिदिवं व्रजेत्[7]॥" इत्यादौ बहुत्वानुदित-स्नान-श्रवणात्। मध्याह्न-स्नानन्तु काम्यं प्रहर-द्वयाभ्यन्तर एव, "पूर्वाह्न एव कुर्वीत" इति वचन-श्रवणात्।

पाद्मे, "कम्बलाश्वतरौ नागौ विपुले यमुना-तटे[8]। तत्र स्नात्वा च पीत्वा च सर्व-पापैः प्रमुच्यते[9]। तत्र गत्वा च संस्थाने महादेवस्य धीमतः[10]। नरस्तारयते पुंसो दश पूर्वान्[11] दशापरान्॥" अद्य सर्व-पाप-विनिर्मुक्ति-कामः कम्बलाश्वतर-समीपे यमुनायां

---

1. C. अत एव च।

2. VisS., 64. 9, p. 92. Ahnika T., p. 36, ll. 11-2, chap. प्रातःस्नान and MalaMT, part 1, p. 85.

3. C. माघे-भास्करोदये। 4. C. विधायकेन।

5. च Not found in C. 6. वाक्यभेदस्यान्याय्यत्वात्।

7. MalaMT., part 1, p. 76, ll. 6-8, in "स्कान्दे" but the verse is not actully found in this ed.; other eds. give it, e.g., Jīv.'s ed., 1895, p. 750.

8. PadmaP., स्वर्ग-खण्ड, 21. 28f., p. 150f. v. r. यमुना-दक्षिणे तटे। 9. Op. cit., मुच्यते सर्व-पातकैः।

10. C. धीमतः। Also PadmaP., Cal. ed.

11. Op. cit., सर्वान् दशातीतान्।

स्नानमहं करिष्ये । अत्र तज्जल-पानेऽप्येतदेव फलम् । इदन्तु स्थानं महादेवस्य । एतद्गमने तु अद्य दश-पूर्व-दशापर-[1] पुरुष-तारण-कामः कम्बलाश्वतरोपलक्षित-यमुना-तट-रूप-महादेव-स्थान[2]-गमनमहं करिष्ये ।

तथा—"कूपञ्चैव तु सामुद्रं प्रतिष्ठानन्तु[3] विश्रुतम् । ब्रह्मचारी जित-क्रोधस्त्रि-रात्रं यत्र[4] तिष्ठति । सर्व-पाप-विशुद्धात्मा सोऽश्वमेध-फलं लभेत् ॥" अद्य सर्व-पाप-विशुद्धात्मत्वाश्वमेध-फल-सम-फल-प्राप्ति-कामः प्रतिष्ठाने त्रि-रात्र[5]-वासमहं करिष्ये ।

तथा—"उत्तरेण प्रतिष्ठानाद्भागीरथ्याश्च[6] पूर्वतः । हंस-प्रतपनं[7] नाम त्रिषु लोकेषु[8] विश्रुतम् ॥ अश्वमेध-फलं तत्र स्नान-मात्रेण[9] भारत । यावच्चन्द्रश्च सूर्यश्च तावत् स्वर्गे महीयते ॥" अद्याश्वमेध-फल-सम-फल-प्राप्ति-पूर्वक-चन्द्रार्क-[10]यावत्-कालावच्छिन्न-स्वर्गाधिकरणक-महितत्व-कामो हंस-प्रतपने स्नानमहं करिष्ये ।

तथा—"ततो भोगवतीं गत्वा वासुकेरुत्तरेण तु । दशाश्वमेधिकं नाम तत्तीर्थं परमं[11] भवेत् ॥ कृत्वाऽभिषेकन्तु नरः[12] सोऽश्वमेध[13]-फलं लभेत् । धनाढ्यो रूपवान् दक्षो दाता भवति

1. A, दशावर ।
2. रूप-महादेव-स्थान is omitted in C.
3. Op. cit., प्रतिष्ठानञ्च ।
4. Op. cit., यदि ।
5. A. दिवा-रात्र ।
6. Op. cit., भागीरथ्यास्तु ।
7. Op. cit., प्रपतनं ।
8. Op. cit., तीर्थं त्रैलोक्य— ।
9. Op. cit., तस्मिन् स्नात-मात्रस्य ।
10. C. चन्द्र-सूर्य ।
11. Op. cit., तीर्थं तत्रापरं ।
12. C. तत्राभिषेकं कृत्वा तु ।
13. C. अश्वमेध ।

धार्मिकः ॥ चतुर्वेदेषु यत् पुण्यं सत्यवादिषु[1] यत् फलम् । अहिंसायान्तु यो धर्मो गमनात् तस्य तत् फलम्[2] ॥ अत्र भोगवती नाम वासुकेरुत्तरेण तु । तत्राभिषेकं यः कुर्यात् सोऽश्वमेध-फलं लभेत्[3] ॥" [ अद्य ] चतुर्वेदाध्ययन-जन्य-सत्यवादिता-जन्याहिंसा-जन्य-फल-सम-फल-प्राप्ति-कामो दशाश्वमेधिक-गमनमहं करिष्ये । अद्याश्वमेध-जन्य-फल-सम-फल-प्राप्ति-धनाढ्यत्व-रूपवत्त्व-दक्षत्व-दातृत्व-धार्मिकत्व-भावन-कामो दशाश्व-मेधिक-तीर्थे स्नानमहं करिष्ये । अद्याश्वमेध-यज्ञ-जन्य-फल-सम-फल-प्राप्ति-कामो भोगवत्यां स्नानमहं करिष्ये ।

तथा—"यामुने चोत्तरे कूले प्रयागस्य तु दक्षिणे । ऋण-मोचनकं[4] नाम तीर्थं तु परमं ततः[5] । एक-रात्रोषितः स्नात्वा[6] ऋणैः सर्वैः प्रमुच्यते । स्वर्ग-[7]लोकमवाप्नोति अनृतश्च[8] सदा भवेत् ॥" अद्य सकलर्ण-विमुक्ति-स्वर्ग-लोकावाप्त्यनृतत्व-काम ऋण-मोचन-तीर्थे स्नानमहं करिष्ये ।

तथा—"तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर । कीर्तनाल्लभते पुण्यं दृष्ट्वा भद्राणि पश्यति ॥ अवगाह्य[9] च पीत्वा[10] च पुनात्यासप्तमं कुलम् ॥" अद्य सप्तम-कुल-पवित्री-करण[11]-कामः प्रयाग-मण्डलाभ्यन्तर-यमुनायां स्नानमहं करिष्ये ।

1. Op. cit., सत्य-वादिषु । 2. Op. cit., गमनादेव तद्भवेत् ।
3. This verse is not traced in the Cal. ed. of the PadmaP. 4. Op. cit., ऋण-प्रमोचनं ।
5. C. स्मृतम् । PadmaP., तीर्थं तत् परमं स्मृतं ।
6. Op. cit., भूत्वा । 7. Op. cit., सूर्य ।
8. अनृणो च । 9. Op. cit, 22. 27-28, अवगाह्य ।
10. Op. cit., पीता । 11. करण is omitted in A.

प्रयागावच्छिन्न-गङ्गा-स्नान-मात्रं ।

तथा—"तिस्रः कोट्योऽर्ध-कोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरीक्षे च तत् सर्वं जाह्नवी स्मृता[1] ॥ अद्य भुव्यन्तरीक्षाधिकरणक-सार्ध-कोटि तीर्थ-स्नान-जन्य-फल-सम-फल-प्राप्ति-कामः प्रयागावच्छिन्न-गङ्गायां स्नानमहं करिष्ये ।

तत्र माघाधि-करणक-सामान्य-तीर्थ-फलम् ।

"स्नानक्रमानसे माघस्तस्य-मोक्ष-फल-प्रदः । रुद्र-लोक-प्रदो माघो नार्मदः पाप-नाशनः । सारस्वतोऽव-विध्वंसी ब्रह्म-लोक-फलस्तथा । विशाल-फलदो माघो विशालायां द्विजोत्तमाः ॥ पापेन्धन-दवाग्निस्तु गर्भ-हेतु-चयावहः । विष्णु-लोकाय मोक्षाय जाह्नवः परिकीर्तितः ॥ सरयूर्गण्डकी सिन्धुश्चन्द्रभागा च कौशिकी । कावेरी तुङ्गभद्रा च याश्चान्याश्च समुद्रगाः । तासु स्नायी नरो याति स्वर्ग-लोकं विकल्मषः । नैमिषे विष्णु-सारूप्यं पुष्करे ब्रह्मणोऽन्तिकम् ॥ आखण्डलस्य लोको हि कुरुक्षेत्रे च माघतः । माघो देव-ह्रदे विप्र योग-सिद्धि-फल-प्रदः ॥ प्रभासे मकरादित्ये माघे रुद्र-गणो भवेत् । देविकायां देव-देहो नरो भवति माघतः ॥ माघ-स्नानेन भो विप्र गोमत्यामपुनर्भवः । हेमकूटे महाकाले ॐकारे डामरे तथा ॥ नीलकण्ठ-ह्रदे माघाद्रुद्र-लोके महीयते । सर्वासां सरितां विप्र संप्लवे मकरे रवौ ॥ स्नानेन सर्व-कामानामवाप्तिर्जायते नृप । माघस्तु

1. PadmaP., स्वर्ग-खण्ड, 23. 7, p. 159. BhavP., uttara-parvan, chap 11, p. 485, v. 6; v. r. तानि ते सन्ति जाह्नवि भुव्यन्तरीक्षे in C. कोट्यर्धकोटी च in A.

प्राप्यते धन्यैः प्रयागे द्विज-सत्तम[1]। अपुनर्भवदं तत्र सितासित जलं यतः ॥"

पाद्मे—"शृणु राजन् प्रयागस्य माहात्म्यं पुनरेव हि। नैमिषं पुष्करञ्चैव गो-तीर्थं सिन्धु-सागरम्[2] ॥ [3]गयाञ्च धेनुकञ्चैव गङ्गा-सागर-सङ्गमः। एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः ॥ दश-तीर्थ-सहस्राणि त्रिंशत्कोट्यस्तथा-पराः। प्रयागे संस्थिता नित्यमेवमाहुर्मनीषिणः[3] ॥"

तथा—"पृथिव्यां यानि तीर्थानि पुण्यः सन्तीह भूतले। स्नातु-मायान्तु ता वेण्यां माघे मासि नराधिप ॥ ब्रह्म-विष्णु-महादेवा रुद्रादित्य-मरुद्गणाः। गन्धर्व-लोक-पालाश्च यक्ष-किन्नर-गुह्यकाः ॥ अणिमादि-गुणोपेता ये चान्ये तत्त्व-दर्शिनः। ब्रह्माणी पार्वती लक्ष्मीः शची मेधाऽदिती रतिः ॥ सर्वास्ता देव-पत्नयश्च तथा नागाङ्गना नृप। घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ॥ गणाश्चाप्सरसां सर्वे पितृणाञ्च गणास्तथा। कृते युगे स्वरूपेण कलौ प्रच्छन्न-रूपिणः ॥ स्नातुमायान्ति ते सर्वे माघे वेण्यां नराधिप ॥"

"भविष्ये—"गङ्गा-द्वारे दशावर्ते स्नान-पुण्य-फलं शृणु। समानो राजसूयानां फलं स्यादश्व-मेधयोः ॥ उषित्वा तत्र मासार्धं

1. For these verses, see pp. 282-283, but the line ज्ञान-ध्यानसि माधवस्य-मोक्ष-फलप्रदः is dropped there.

2. PadmaP., स्वर्ग-खण्ड, chap 23, v. 1, p. 159.

3. PadmaP., स्वर्ग-खण्ड, chap. 23, vv. 2-3, p. 159; v. r., first line, "कुरु-क्षेत्रं तथा चैव गङ्गा-सागरमेव च"; third line : परे।

षष्ठां विश्वजितां[1] फलम्। दशायुत-गवां दान[2]-पुण्यञ्च लभते नरः॥" अद्य राजसूय-समस्ताश्वमेध[3]-द्वय-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-द्वारे गङ्गायां स्नानमहं करिष्ये। दशावर्त-स्नानेऽप्येषा कामना। अद्य विश्वजित्-षट्क-जन्य-फल-सम-फल-गो-लक्ष-दान-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामोऽद्यादि मासार्धं गङ्गा-द्वारे दशावर्ते[4] वा स्नानमहं करिष्ये।

तथा—"सुरोत्तमञ्च गोविन्दं रुद्रं कनखले स्थितम्। स्नात्वा वाप्यथ गङ्गायां पुण्यमक्षयमाप्नुयात्॥" अद्याक्षय-पुण्य-प्राप्ति-कामः कनखले स्नात्वा तत्र सुरोत्तम-गोविन्द-रुद्र-पूजनमहं करिष्ये।

महाभारते—"तीर्थञ्च शौकरं नाम महापुण्यं मुने शृणु। यस्मिन्नाविरभूत् पूर्वं वराहाकृतिरच्युतः॥ शतमग्निचितां पुण्यं ज्योतिष्टोम-द्वयस्य च। अग्निष्टोम-सहस्रस्य फलमवाप्नुयान्नरः॥" अद्याग्निचिच्छत-ज्योतिष्टोम-द्वय-जन्य-पुण्याग्निष्टोम-सहस्र-जन्य-फल-सम-फल-प्राप्ति-कामः शौकर-तीर्थे गङ्गायां स्नानमहं करिष्ये।

तथा—"तत्रैव ब्रह्मणस्तीर्थं ज्योतिष्टोमायुतस्य च। अश्वमेध-त्रयस्यापि स्नातस्तत्र फलं लभेत्॥" अद्य ज्योतिष्टोमायुताश्वमेध-त्रय-फल-सम-फल-प्राप्ति-कामो ब्रह्म-तीर्थे स्नानमहं करिष्ये।

तथा—"कुब्जाख्यं तीर्थमनघं यत्र च व्याधयोऽखिलाः। नश्यन्ति सप्त-जन्मोत्थं स्वाचष्टं पातकं नृणाम्॥" अद्याखिल-सर्व-व्याधि-सप्तजन्मोत्थ-पातक-नाश-कामः कुब्जाख्य-तीर्थे स्नान-महं करिष्ये।

1. C. विश्वजितः। 2. C. नाम। 3. C. सप्तमाश्वमेध। 4. C. कुशावर्ते।

"तथाहुः कापिलं[1] तीर्थं कपिला-धेनवोऽन्वहम्। दत्ता धेनायुतान्यष्टौ स्नात्वा तस्य फलं लभेत्॥" अद्यान्वह-दत्त-कपिला-धेन्वयुताष्टक-जन्य-फल-सम-फल-प्राप्ति-कामः कापिल-तीर्थे[2] स्नानमहं करिष्ये।

तथा—"गङ्गा-द्वारे दशावर्ते[3] विन्ध्ये च नील[4]-पर्वते। तीर्थे कनखले स्नात्वा धूत-पापो दिवं व्रजेत्॥" अद्य धूत-पाप-स्वीय-स्वर्ग-लोक-गमन-कामो गङ्गा-द्वारे[5] स्नानमहं करिष्ये। एतेषा-मन्यतमस्य स्नानेऽप्ये तदेव फलम्।

काशीमभिधाय[6] तत्रैव—"पवित्राख्यं ततस्तीर्थं सर्व-तीर्थात् पवित्रकम्। द्वयोर्विंश्वजितोस्तत्र स्नानात् पुण्यं लभेन्नरः॥" अद्य विश्वजिद्द्वय-जन्य-पुण्य-सम-पुण्य-प्राप्ति-कामः पवित्राख्य-तीर्थे स्नानमहं करिष्ये।

तथा—"वेणी-वाख्यं ततस्तीर्थं सरयूर्यत्र गङ्गया। सुपुण्यया महापुण्या स्वसाऽमुत्रैव[7] सङ्गता॥ हरेर्दक्षिण-पादाब्ज-क्षालना-दमरापगा। वाम-पादोदकं विद्धि सरयूं मानसोद्भवाम्[8]॥ तीर्थे तत्रार्चयन् रुद्रं विष्णुर्विष्णुत्वमाप्तवान्। पञ्चाश्वमेध-फलदं स्नानं तस्मिन्नघापहम्॥" 'वेणीवाख्य' दर्भरोति[9] प्रसिद्धम्। अद्य पञ्चाश्वमेध-यज्ञ-फल-प्राप्ति-पाप-नाश-कामः सरयू-सङ्गत-गङ्गायां स्नानमहं करिष्ये।

तथा—"ततस्तु गण्डकी-तीर्थं गण्डकी यत्र संस्थिता[10]। गो-

1. C. अथातः कापिलं। 2. C. कपिल-तीर्थे। 3. C. कुशावर्ते।
4. A. नीन। 5. A. गङ्गा-तीरे।
6. A. काशीनामादिमभिधाय। 7. C. स्वसामुत्रैव।
8. C. मानसोत्तराम्। 9. C. दसवीति। 10. A. गण्डकी-स्थ-सङ्गता।

सहस्रस्य दानञ्च तत्र स्नानेन सम्मितम् ॥" अद्य गो-सहस्र-दान-जन्य-फल-सम-फल-प्राप्ति-कामो गण्डकी-सङ्गत-गङ्गायां स्नानमहं करिष्ये। तथा—"राम-तीर्थं ततः पुण्यं वैकुण्ठायन[1]-सन्निधौ। सोम-तीर्थं ततः पुण्यं यत्रासौ स्वकुलो मुनिः। समभ्यर्च्य शिवं ध्यायन् गणतान्तु समाययौ॥" तथा—"चम्पकाख्यं महातीर्थं यद् गङ्गोत्तर-वाहिनी। मणिकर्णिकावद् विज्ञेया महापातक-नाशिनी॥" अद्य महापातक-नाश-कामश्चम्पकाख्ये[2] तीर्थं उत्तर-वाहिन्यां गङ्गायां स्नानमहं करिष्ये।

तथा—"विश्वामित्रस्य भगिनी गङ्गायां यत्र सङ्गता। तत्रा-मुत्य च तत्रारिः सम्मतस्तु प्रियातिथिः॥ अद्य तत्रारि-सम्मत-प्रियातिथित्व-कामः कौशिकी-सङ्गत-गङ्गायां स्नानमहं करिष्ये।

तथा—"जह्नु-ह्रदे महातीर्थे स्नानं यत्र शरीरिणाम्। एक-विंशति-सन्तान-तारकं किमतः परम्॥" 'जह्नु-ह्रदे' एक-शाखा-नगरे गङ्गायाम्। अद्यैक-विंशति-सन्तति-तारण-कामो जह्नु-ह्रदे स्नानमहं करिष्ये।

तथा—"तस्माद[तिथि(?)दिति]-तीर्थञ्च यत्राराध्यादिति-हरिम्। कश्यपात्तनयं लेभे तत्र स्नानं महोदयम्॥" अद्यैक-विंशति-सन्तति-तारण-कामोऽदिति-तीर्थे स्नानमहं करिष्ये।

तथा—"शिलोच्चयं महातीर्थं यत्र तप्ता तपः प्रजाः। नृपा-दिभिः सह स्वर्गं यान्ति तीर्थ-गुणाश्रयात्। इन्द्राणी नाम तीर्थं स्यादिन्द्राणी यत्र वासवम्। तपस्तप्त्वा पतिं लेभे शचीवास्य[3] प्रभावतः॥ पुण्यमाम्रातकं[4] नाम विश्वामित्रस्तपश्चरन्। यत्र

1. A. वैदव्रायन। 2. C. चम्पारण्याख्य।
3. A. पत्नीवास्य। 4. A. आम्रातकं।

ब्रह्मर्षितां लेभे क्षत्रियस्तीर्थ-सेवया ॥ प्रद्युम्न-तीर्थं तपसा यत्र स्नानात् स्मरो हरेः । प्रद्युम्न-नामा पुत्रोऽभूत् स्नानं तत्र महोदयम्[1] ॥ ततो दक्षिण-प्रयागस्तु गङ्गातो यमुना गता । स्नानात्तत्राक्षयं पुण्यं प्रयाग इव लभ्यते ॥" तन्मुक्त-वेणी, "सप्त ग्राम" इति प्रसिद्धम् । अक्षाक्षय-पुण्य-प्राप्ति-कामो दक्षिण-प्रयागे स्नानमहं करिष्ये । अन्येषामन्यतम-स्नाने त्वाकाङ्क्षित-कामनां कामयमानः स्नायादित्यर्थः ।

ब्रह्माण्डे—"एकेन स्नान-मात्रेण विधिना भक्तिमान्नरः । अश्वमेध-फलं सद्यो गङ्गायां प्राप्नुयाद् ध्रुवम् ॥" अश्वाश्वमेध-जन्य-फल-सम-फल[2]-प्राप्ति-कामो भक्त्या वैध-गङ्गा-स्नानमहं करिष्ये ।

भारते—"सर्व-तीर्थेषु यत् पुण्यं सर्वेष्वायतनेषु च । तत् फलं लभते सद्यो[3] गङ्गा-स्नानान्न संशयः ॥" तत्र "योग-सिद्धि"-न्यायादन्यतम[4]-फल-कामनाऽधिकारि-विशेषणमिति द्रष्टव्यम् ।

ब्रह्माण्डे—"प्रतिमासे चतुर्दश्यामष्टम्याञ्चैव[5] सर्वदा । पक्षयोरुभयोश्चैव सर्व-पापेषु जाह्नवीम् ॥ भागीरथीं विशेषेण तीर्थान्यायतनानि[6] च । समायान्ति विशेषेण सर्व-पाप-हराणि च[7] ॥" यदाह—"महाज्यैष्ठी सुर-श्रेष्ठ कृताऽनन्त-फला स्मृता । तस्मात्तु जाह्नवी-स्नानं सूर्य-यज्ञ-शताधिकम् ॥"

---

1. A. स्नाने तत्र महोदयः ।
2. "सम-फल" not found in A.
3. C. सर्वे ।
4. A. अन्यतमं ।
5. A. कर्तव्यतामष्टम्याश्चैव ।
6. C. पुण्यान्यायतानि ।
7. C. तीर्थान्यायतनानि ।

अन्यत्र—"अरुणोदय-वेलायां शुक्ला[1] माघस्य सप्तमी। गङ्गायां यदि लभ्येत सूर्य-ग्रह-शतैः समा[2] ॥" अत्रैतद्वाक्ययोः सूर्य-ग्रह-स्नान[3]-जमेव [ फलम् ], उपस्थितत्वात्, स्नानमपि गाङ्गमेव, "सविहितेषु बुद्धिरन्तरङ्गेति न्यायात्। तेन सूर्य-ग्रह-कालीन-गङ्गा-स्नानस्यैव फलम् इह शत-गुणादि-रूपं भवतीत्यर्थः। एवमन्यत्र स्नान- दानादिष्वपि बोद्धव्यमिति।

स्नानं प्रकीर्णकम्।

भविष्ये—"सोम-सूर्य-ग्रहे लक्षं" व्यतीपाते इति कल्पतरुः।

तथा—"मास-त्रय-फलं तस्मात् फाल्गुनाषाढ-मासयोः। वैध-निरन्तर-मास-त्रयावच्छिन्न-गङ्गा-स्नान-जन्य-फल-प्राप्ति-कामोऽद्यादि फाल्गुनं गङ्गा-स्नानमहं करिष्ये। आषाढ-स्नानेऽप्येवम्।

यम-गङ्गे—"वैशाखे शुक्ल-पक्षे तु तृतीयायां तथैव च। गङ्गा-तोये नरः स्नात्वा मुच्यते सर्व-किल्बिषैः[4] ॥" अद्य वैशाख-शुक्ल-तृतीयायां सर्व-किल्बिष-विमुक्ति-कामो गङ्गायां स्नानमहं करिष्ये।

भारते। "निहत्य कामजान् दोषान् काय-वाक्-चित्त-सम्भवान्। समा-स्नानेन भक्त्या तु मोदते दिवि देववत् ॥" 'समा' वर्षम्। अद्य काय-वाक्-चित्त-सम्भव-कामज-दोष-निहनन-पूर्वक-स्वर्लोकाधिकरणक-देववन्मोदमानत्व[5]-कामोऽद्यादि भक्त्या वर्षं गङ्गायां स्नानमहं करिष्ये।

---

1. A. शुद्धा।
2. Tithi T, chap, माघ-सप्तमी p. 146, ll. 8-9.
3. C. स्नानजन्यम्।
4. Not traced in यम-संहिता। 5. A. मोदनाय।

अथ प्रयाग-मुण्डनं नाम[1] ।

तत्र यद्यपि कल्पतरुकारेण प्रयागे मुण्डनं नोक्तं नवा तत्-प्रमाणमादर्शितमपि, तथापि बहुभिर्निबन्धृद्भिः परिगृहीतानि तद्वचनान्युपसंह्रियन्ते ।

तथाहि—"प्रयागे वपनं कुर्याद् गयायां[2] पिण्ड-पातनम् । दानं दद्यात् कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥ किं गया-पिण्ड-दानेन काश्यां वा मरणेन किम् । किं कुरुक्षेत्र-दानेन प्रयागे मुण्डनं यदि ॥" अतः[3] "प्रयागे वपनं कुर्यादि"ति विधिः । तत्र[4] फलाकाङ्क्षया रात्रि-सत्रादिवदानुवादिकमेव फलं[5] मुन्नीयते । तच्च "किं ग[ङ्गा(?)या] पिण्ड-दानेने"ति श्रवणाद् गया-पिण्ड-दान-जन्य[6]-फलम् । तेन गया-पिण्ड-दान-जन्य-काशी-मरण-जन्य-फल-सम-फल[7]-कामोऽत्राधिकारी । इदन्तु चिन्त्यते[8] । यद्यपि मुण्डनस्य परिवापन-रूपतया तत्रानुवादेन फल-निर्देशाद्[9] न विहिते वपने फलान्वयः प्रतिभाति, वपन-वापनयोर्भेदात् ; तथापि विहित-कर्माङ्गत्वनुवादस्य तत्र फलमात्र-समर्पकतया[10] विधेः[11] प्राधान्याद् विहित एवात्र फल-सम्बन्धः ।

नन्वेवं वप्तुः फलं स्यान्न तु वापयितु[12]रिति चेन्न । विधेरपि हि वापन-परत्वात् । तेन कारयेदित्यर्थे कुर्यादिति णिचो लोपेन

1. C. मुण्डनादीनि । 2 C. गङ्गायां । 3. A. अत्र ।
4. A. अत्र । 5. A. स एव यथान्यवादिष्टमेव फल(?)
6. जन्य not found in A. 7. सम-फल not found in A.
8. इदं तु चिन्त्यते not found in C.
9. A. तत्रानुवादेन फलानिर्देशे ।
10. C. सम्पर्कतया । 11. A. विधिः ।
12. वापयितुरिति not found in A.

निर्देशः। नन्वेवं[1] निजगर्भित[2]मेवार्थं स्फुटीकृत्य यथोक्त-फल-कामः प्रयागे वपनमहं[3] [करिष्ये (?) कारयिष्ये] इत्यभिलापः कार्यं इति चेत् सत्यं, किन्तु "प्रकृतिवद्विकृतिरि"ति न्यायेन प्रकृत्यनुसारेण एव 'करिष्ये'-शब्दाभिलापोऽत्रोचितः। अत एव [यत्र]र्त्विग्द्वाराऽपीज्या निर्वाह्यते तत्रापि "यजेते"ति विध्यनुरोधाद् यजमानो "यक्ष्ये" एवाभिलपति न तु "याजयिष्ये" इति केचित्।

अत्रोच्यते। प्रकृतिवद् विकृतिरिति हि विकृति-यागेष्व-विकृति-[4]याग-धर्मातिदेशो[5] न तु लोक-वाक्येष्वर्थ[6]-वाचकस्य-शब्द[7] नियम-विधिः, बहुव्यभिचारात्। नच, "यथाश्रुति विहार[8]" इति श्रवणात् [यदेवं[9](?) यदेव] पदं श्रुतं तदत्याज्यमिति वाच्यम्, देवता-पर-शब्दस्य च तथात्वात्[10]। अयमर्थं[11]-परः शब्दः, अर्थस्यैव वापनस्यात्र देशितत्वात्। नन्वस्तु तथा, तथापि लुप्त-णिच्कमेव निर्दिश्यताम् कुर्यामादित्यर्थे वान्वय-धीः स्यादिति चेदस्त्वेवं [तथापि] परिवापनस्य देशितत्वे[12] "अर्थादायत्ते हि शब्द-प्रयोगे किमित्यवाचकं[13] प्रयोक्ष्यामहे" इति न्यायात्

---

1. नन्वेवं not found in A.
2. A. निगर्भितम्। 3. अहं not found in A.
4. विकृति-यागेष्वविकृति not found in A.
5. अति not found in A.
6. A. देशो न तु लौकिक-वाक्ये अर्थं।
7. A. शब्द। 8. A. तथा श्रुतिपरिहार। 9. C. यद्येवं।
10. A. तथा रीतिः। 11. C. अयमर्थं।
12. A. प रवापनस्यादशितत्वे। 13. A. किमित्यवाच्यं।

"कारयिषेः"[1] इत्येवास्तु। "यष्टव्य" इति प्रयोगश्च न दृष्टान्तो[2] वैयर्थ्यात्। तत्र हि देवतोद्देशक-[3]हविस्त्यागो यागः, स च यजमान-कर्त्तृक एव संविभाग-पूर्वक इत्यनुवादः, तत्-त्यक्त-द्रव्य-प्रक्षेप-फलको होमः, स एव ऋत्विक्-कर्त्तृकः। अत एव ऋत्विजो याजका न तु यष्टारः। अत एव "विश्वामित्रस्त्रिशङ्कुं याजयामास" इति टीकापीति दिक्।

एवं प्रयागावच्छिन्न-गङ्गायामपि मुण्डनम्, "केशानां यावती संख्या छिन्नानां जाह्नवी-जले। तावद्वर्ष-सहस्राणि स्वर्ग-लोके महीयते[4] ॥" इत्यादिभिः शिष्ट-परिगृहीत[5]-वचनैस्तत्रापि मुण्डन-विधानात्। इन्नै [कं(?)वं] स्वर्ग-फलकमिदं मोक्ष-फलकञ्च प्रयागीयं मुण्डनम्। कामनायाञ्च न तन्त्रेण प्रसङ्गेन वा युगपत् सिद्धिः, नानाफलाधिकारिकत्वात्। कामनायाश्च युगपदसम्भवात्। ततश्च विध्याकाङ्क्षायां गङ्गा-मुण्डनमाद्यं "गङ्गां प्राप्य"त्यादि-श्रवणात् तस्य प्राप्ति-मात्राधिकारित्वात्। प्रयाग-मुण्डने तु न तथा, तत्र कालाश्रवणात्। ननु प्रयागे "मुण्डनञ्चोपवासश्च" इत्यादि-श्रुत्या मुण्डनोपवासयोरेक-कालीनत्वं प्राप्यते। उपवासश्च तत्र प्राप्ति-दिने कर्तव्य इति तत्र मुण्डनमपि तथाऽस्त्विति चेत्, सत्यम्, उपवास-मुण्डनयो-रपि तत्र प्राप्ति-निमित्तकत्वात्, तस्य च मुण्डनस्य गङ्गा-मुण्डनेनैव काम्येन प्रसक्तौ निर्वाहात्। यत्तु तत्र काम्यं[6] मुण्डनं तदनियत-कालम् अतो दिनान्तरे[7] स्थले[8] तदनुष्ठानम्।

---

1. C. कारयिषे। 2. C. दृष्टान्तेन। 3. A. देवतोद्देश्य।
4. प्रायश्चित्त-तत्त्व p. 78, ll. 6-7
5. परि not in C. 6. A. काम्य।
7. प्रयाग-मुण्डनाभ्यन्तरे not found in C. 8. C. स्थाने।

नन्विदं[1] मुण्डनं काम्यञ्चेत्[2] स्नानवत् प्रतिदिनमापद्येत। तत्[3]-प्राप्ति-निमित्तकमिति चेत्, प्रथम-मात्रं[4] क्रियेत[5]। निमित्त-काम्ययोस्तु[6]दत्तरेव सन्निपातात्, समर्थस्य चोपायोगादिति। अत्र [ चेत्(?)च ]

"संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद् यदि।
मुण्डनञ्चोपवासञ्च ततो यत्नेन कारयेत्[7] ॥"

इति वचनादैकोपाधिक-प्रयुक्तं मुण्डनं दश-मासाभ्यन्तरे पुनस्तीर्थे न कर्तव्यम्। न चैवं प्रयागीयं प्रथम-मुण्डनमपि न स्यात्तदा[8] तस्यापि तदवच्छिन्न-गङ्गा-मुण्डनापेक्षया द्वितीयत्वादिति वाच्यम्, तस्य प्रयाग-विहितस्य गङ्गा-मुण्डनेन भिन्नाधिकारिकेण प्रसङ्गतस्तन्त्रतो[9] वा न[10] निष्पत्तिरिति पृथगनुष्ठानस्य तत्र न्याय्यत्वादि[11]त्याहुः। तन्न, एतद्वचनस्य निर्मूलत्वात्, समूलत्वेऽपि प्राप्ति-निमित्तक-मुण्डन-परत्वात्। तन्निमित्तकोपवास-साहचर्याद् व्रजेदित्यभिधानाच्चेति। अत्रोच्यते, "गङ्गायां भास्कर-चेत्रे मुण्डनं यो न कारयेत्। स कोटि-कुल-संयुक्त आकल्पं रौरवे वसेत्[12] ॥" इत्यादिना अकरणे निन्दा-

---

1. C. तदिदं।
2. A. केवल-काम्यं चेत्।
3. तत् omitted in A.
4. C. प्रथममेव।
5. C. क्रियते।
6. C. स्तु तदत्तरेव।
7. प्रायश्चित्त-तत्त्व, p. 76, ll. 12-13.
8. तदा omitted in A.
9. C. प्रसङ्गात्तन्त्रतोऽपि।
10. न omitted in A.
11. A. तत्रान्याय्यत्वात्।
12. प्रायश्चित्त-तत्त्व, p. 77, ll. 10-11.

श्रवणात् काम्यं फल-श्रवणाच्च प्रयाग-मुण्डनं नित्य-काम्यतया सिद्धम् । तच्च सकृत् करणादेव शास्त्रार्थ-सिद्धेरेकस्यां यात्रायामेकमेवानियत-कालञ्चेत्यवसीयते । एवं तदवच्छिन्न-गङ्गा-मुण्डनमपीति ।

अन्ये तु, प्रयाग-गङ्गयोः प्राप्ति-निमित्तकमेकैकं मुण्डनम् । तथा स्वर्ग-फलमेकैकं [ तमो(?) मतो ] नैमित्तिकयोः काम्य-प्रसङ्गेन काम्ययोश्च तन्त्रेणानुष्ठानमिति प्राप्ति-दिन एव सकृदेव मुण्डनम्, प्रयाग-मुण्डनाभ्यन्तरे गङ्गा-मुण्डनमिति चतुर्णामेव निर्वाह इत्याहुः ।

अत्र स्त्रीणां प्रयाग-प्राप्तानां मुण्डने प्राप्ते "सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलि-द्वयम् । एवमेव तु नारीणां शिरसो मुण्डनं भवेत्[1] ॥" इत्यादेः प्रायश्चित्त-प्रकरणे[2] अ(?)तस्या-प्याकाङ्क्षायां तेनैवात्रान्वयात् प्रयागेऽपि तासां द्व्यङ्गुल-केशाग्र-कर्तन-मात्रं वपनमिति वदन्ति[3] । तन्न, "केशानाश्रित्य तिष्ठन्ति सर्वपापानि देहिनाम् । तिष्ठन्ति (?) तीर्थ-स्नानेन तस्मात्तान्यव वापयेत्[4] ।" इत्यादिना तीर्थे केश-मूल-वपनस्यैव विशिष्य विहितत्वात् इति ।

अन्ये तु, प्रयागे प्राप्ति-निमित्तक[मेक]मेव[5] मुण्डनं फल-श्रवणात् काम्यमपि, भेदे प्रमाणाभावात् । एवं गङ्गा-प्राप्ति-

1. प्रायश्चित्त-तत्त्व, chap. प्रायश्चित्त-पूर्वाङ्ग-कृत्य, p. 118, ll. 6-7. v. r. सर्वांस्तु च तु···स्मृतम् ।

2. A, प्रयागस्य प्रकरणे । 3. वदन्ति is omitted in C.

4. PrayT., p. 78, ll. 2-4. v. r. केश-मूलान्युपाश्रित्य सर्व···

5. C. निमित्तकमेकं ।

निमित्तकमपि फल-श्रवणेन काम्यमपि। काम्यत्वोभयत्र[1] स्वर्ग एवेति युगपद्देवोभय-प्राप्ति-रूप-निमित्त-सम्बन्धादुभय-कामना-सत्त्वात् प्राप्ति-दिन एव तन्त्रे णैवो[2]भय-सिद्धिरित्याहुः।

तदयमत्र प्रयोगः। प्रकृत-वेध-यात्र्येण[3] प्राच्यां गौतम-मुन्याश्रमात्[4] प्राक् पूर्व-दिने उषित्वा प्रवेश-दिने प्रातः-स्नानादि कृत्वा प्रयाग-प्रवेशनादि-संकल्पः करणीयः। तद् यथा. अद्य प्रयाग-मण्डल-भूम्यधिकरणक[5]-मत्कर्तव्य-पद-[प्रक्षेप] सम-संख्याश्वमेध-फल-सम-फल-प्राप्ति-कामः प्रयाग-मण्डल-प्रवेश-पूर्वक-तद्भूम्यधिकरणक-गमनमहं करिष्ये। इति संकल्प्य प्रयागं प्राप्य चादावुद्धृतोदकेन स्नात्वा ततः शुचिर्वेणीं[6] प्रविश्य—अद्य मार्च विष्णु-पुर-गमन-कामो गङ्गा-यामुन-सङ्गमे स्नानमहं करिष्ये। इति सङ्कल्प्य यथाशास्त्रोक्त-विधानात् तदङ्गानि सर्व-साधारण-विधिनापि[7] स्नायात्।

अथैवं [8]यथाभिलषित-कामनया स्नात्वा[9] नित्य-कर्म-देवतार्चनान्तं[10]कृत्वा अद्य गङ्गा-पतिष्यावच्छेद[11]नीय(?)-लोम-सम[12]-संख्य-बहु-वर्ष-सहस्रावच्छिन्न-स्वर्ग-लोक-महितत्व-कामो गङ्गायां वपनमहं [करिष्ये (?) कारयिष्ये]। इति संकल्प्य स्नातोपविष्टस्तथा वापयेद् यथा[13] स्वयमेव केशादीनि[14] गङ्गायां

1. A. काम्यत्वे तु यत्र। 2. एव not found in A.
3. A. प्रकृत-वेध-मार्गेण। 4. C. गौतमाश्रमात्।
5. C भूम्यधिकारक। 6. C. शुचिर्वेणीं।
7. C. विधानादपि। 8. C. तथैव।
9. यथाभिलषित-कामनया स्नात्वा is omitted in C.
10. C. देवतार्चनं। 11. C. पतिष्यावच्छेद(?)।
12. सम omitted in C. 13. यथा omitted in C.
14. C. केशादीनि यथा।

पतन्ति। अन्यद् यथोक्त-कामनया वा कामयेत्[1](?)। ततः स्नात्वा वस्त्रान्तरं परिधाय, अद्य स्वर्ग-प्राप्ति-कामस्तीर्थोपवासमहं करिष्ये। इति उपवसेत्[2]। ब्रह्म-लोक-प्राप्तिः फलमस्येति[3] केचित्। एतयोराकर-वचनन्तु पूर्वमुक्तमेव। ततः यात्राधिकारिणा तीर्थ-प्राप्ति-निमित्तकं पार्वण-श्राद्धं[4] कार्यम्। तदसम्पत्तौ षट्पुरुष-पिण्ड-दानमपि। वस्तुतस्तु निमित्ततयोपवासानुष्ठान-सम्भवेऽपि विश्वजिन्न्यायेन[5] फल-कल्पने[6] गौरवादयमुपवासो निष्फल एव देशना-बलात्। ततश्चानेनैव उपवासेन सम्पन्नाधिकार-स्तदुत्तर-दिने ऋण-मोचन-तीर्थे स्नायात्। एतत्तु स्नान-प्रकरणे व्यासेनोक्तमेव। अथ कस्मिन्नपि मासे कस्मिन्नपि दिने प्रयाग-मुण्डनम्। तत्र प्रयागाभ्यन्तरे ब्रह्म-कूप-सन्निधानादौ क्वापि शुचौ देशे कार्यम्। कारित-गङ्गा-वपनस्यापि[7] तत्राधिकारः, कामना-भेदादावश्यकत्वाच्च। अद्य [ प्रयाग(?) गया ] पिण्ड-दान-जन्य-फल-सम-फल-[काशी (?) काशी]-मरण-जन्य-फल-सम-फल-कुरुक्षेत्र-दान-जन्य-फल-सम-फल-प्राप्ति-कामः प्रयागे वपन-महं [ करिष्ये (?) कारयिष्ये ]। इति संकल्प्य स्थल एव [ कारयितव्यम्( ?) वापयितव्यम् ], केचित्तु नेदमाचरन्ति ।

## अथ प्रयाग-मरण-प्रकरणम्।

तत्र मत्स्य-पुराणे—"आ प्रयागात् प्रतिष्ठानाद् आ पुरो वासुकेर्ह्रदात्। कम्बलाश्वतरौ नागौ नागाच्च बहुमूलकात्॥

1. A. वाचामयेत्(?)। 2. A. उपस्पृशेत्। 3. C. फलमिति।
4. श्राद्ध omitted in A. 5. A. विशुद्धि-न्यायेन।
6. फल-कल्पने omitted in A. 7. C. गङ्गावगाहनस्यापि

एतत् प्रजापति-क्षेत्रं त्रिषु लोकेषु विश्रुतम्। तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः[1] ॥"

ऋग्वेदेऽपि[2]—"सितासिते सरिते यत्र सङ्गते तत्राप्लुता दिवमुत्पतन्ति। ये वै तनुं विसृजन्ति धीरास्ते वै जनासो अमृतत्वं[3] भजन्ते ॥" अत्र प्रजापति-क्षेत्रे यस्य मरणं भवति, स मोक्षभाग् भवतीत्यर्थः।

काम्यमप्यत्र मरणम्। अत्र तु सर्व-वर्णानामधिकारः। तदुक्तं तत्रैव मात्स्ये—"न देव-वचनात्तात न लोक-वचनादपि। मतिरुत्क्रमणीया ते प्रयागे मरणं प्रति ॥ दश-तीर्थ-सहस्राणि षष्टि-कोट्यस्तथापराः। तत्रैव तेषां सान्निध्यं कीर्तितं कुरु-नन्दन ॥ या गतिर्योग-युक्तस्य[4] सत्पथस्थस्य धीमतः। सा गतिस्त्यजतः प्राणान् गङ्गा-यमुन-सङ्गमे[5] ॥"

तथा—"व्याधितो यदि वा दीनः क्रुद्धो[6] वापि भवेन्नरः। गङ्गा-यमुनमासाद्य[7] यस्तु प्राणान् परित्यजेत् ॥ दीप्त-काञ्चन-वर्णाभैर्विमानैः सूर्य-वर्चसैः[8]। गन्धर्वाप्सरसां मध्ये स्वर्गे मोदति[9] मानवः ॥ ईप्सितांल्लभते कामान् वदन्ति ऋषि-पुङ्गवाः।

1. MatP., chap. 104, vv. 5-6, p. 311, v. r. आ प्रयाग-प्रतिष्ठानादा पुराद्वासुकेर्ह्रदात्।...नागौ नागश्च बहु-मूलकः।...ततः स्नात्वा...। 2. C. श्रुतिरपि। RVK., 10. 75. 1.

3. A. एतत्वं। 4. A. युक्तस्य।

5. न देव—सङ्गमे traced in MatP., p. 316, chap. 106, v. 11-12; v. r....लोक-वचनात्तथा। ते...गमनं प्रति। तेषां सान्निध्यमत्रैव ततस्तु...। योग-युक्तस्य सत्यस्थस्य मनीषिणः।

6. MatP., दीनो हृष्टो। 7. Op. cit. यमुनयोर्मध्ये।

8. Op. cit. सन्निभैः। 9. Op. cit. क्रीडति।

सर्व-रत्नमयं दिव्यं नानाध्वज-समाकुलम् ॥ वराङ्गना-समाकीर्णं विमानं शुभ-लक्षणम्[1] । गीत-वादित्र-निर्घोषैः[2] प्रसुप्तः प्रतिबुध्यते ॥ यावन्न स्मरते जन्म तावत् स्वर्गे महीयते । ततः स्वर्गात् परिभ्रष्टः क्षीण-कर्मा दिवश्च्युतः ॥ हिरण्य-रत्न-संपूर्णे प्रवृद्धे[3] जायते कुले । तदेव स्मरते तीर्थं स्मरणात्तत्र गच्छति[4] ॥"

तथा—"वट-मूलं समासाद्य यस्तु प्राणान् परित्यजेत्[5] । सर्व-लोकानतिक्रम्य रुद्र-लोकं स गच्छति ॥ तत्र ते द्वादशादित्या-स्तपन्ते चन्द्रमाश्रिताः[6] । निर्दहन्ति जगत् सर्वं वट-मूलं न दह्यते[7] ॥" 'वटो'ऽक्षय-वटः । तथा—"हरिश्च भगवांस्तत्र प्रजापति-पुरस्कृतः[8] ।" अस्तीति शेषः

तथा—"[9]उर्वशी-पुलिने रम्ये विपुले हंस-पाण्डुरे । परित्यजति यः प्राणाञ्छृणु तस्यापि यत् फलम् ॥ षष्टिं वर्ष-सहस्राणि षष्टिं वर्ष-शतानि च । वसेत् स पितृभिः सार्धं स्वर्ग-लोके नराधिप[10] ॥ उर्वशीञ्च सदा[11] पश्येद्देव-लोके नराधिप[12] ।

1. सर्व-रत्नमयैर्दिव्यैर्नानाध्वज समाकुलैः । वराङ्गना-समाकीर्णैर्दृते शुभ-लक्षणैः । 2. Op. cit., वाद्य-विनिर्घोषैः ।

3. Op. cit., समृद्धे । Also MatP.

4. "व्याधितो—गच्छति" traced in MatP., p. 313, chap. 105, v. 3-8 (a).

5. Op. cit., विमुञ्चति । 6. Op. cit., रुद्र-संश्रिताः ।

7. वट-मूलं समासाद्य—दह्यते found in MatP., p. 315, chap. 106, vv. 11-12. 8. MatP., p. 316, chap. 106, v. 18B.

9. "उर्वशी—जायेत रूपवान्" traced in MatP., p. 317, chap. 106, v 34-45 ; v. r. उर्वशी-रमणे पुण्ये विपुले हंस-पाण्डुरे ।

10. C. महीयते । 11. C. यदा ।

12. Op. cit., स्वर्ग-लोके नरोत्तम ।

पूज्यते सततं देवैरूर्षि[1]-गन्धर्व-किन्नरः ॥ ततः स्वर्गात् परिभ्रष्टः क्षीण-कर्मा दिवश्च्युतः । उर्वशी-मुख्यीनान्तु कन्यानां लभते शतम् ॥ मध्ये नारी-सहस्राणां बहूनाञ्च पतिर्भवेत् । दश-ग्राम-सहस्राणां भोक्ता भवति भूमिपः ॥ काञ्ची-नूपुर-शब्देन सुप्तोऽसौ प्रतिबुध्यते । भुक्त्वा भुवि पुमान्[2] भोगांस्तत्तीर्थं लभते पुनः[3] ॥" तथा—"शुद्धाम्बर[4]-धरो नित्यं नियतः संयतेन्द्रियः । एक-कालन्तु भुञ्जानो मासं भोग-पति[5]र्भवेत् ॥ सुवर्णालंकृतानान्तु[6] नारीणां लभते शतम् । पृथिव्यामासमुद्रायां महा-भोग-पति-[7]र्भवेत् ॥ धन-धान्य-समायुक्तो दाता भवति नित्यशः । स भुक्त्वा विविधान् भोगां[8]स्तत्तीर्थं स्मरते[9] पुनः ॥" तथा—"कोटि-तीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् । कोटि-वर्ष-सहस्राणि स्वर्ग-लोके महीयते ॥ ततः स्वर्गात् परिभ्रष्टः क्षीण-कर्मा दिवश्च्युतः[10] । सुवर्ण-मणि-मुक्ताढ्ये कुले[11] जायेत रूपवान् ॥"

तथा—"अकामो वा सकामो वा गङ्गायां यो विपद्यते । मृतस्तु लभते स्वर्गं नरकञ्च न पश्यति[12] ॥ अप्सरोगण-संगीतैः

---

1. Op. cit., पूत ऋषि । 2. Op cit., v. r. भुक्त्वा तु विपुलान् ।
3. Op. cit., भजते पुनः । 4. Op. cit., शुक्लाम्बर ।
5. Op. cit., भूमि-पति । 6. A. सुवस्त्रालङ्कृतानान्तु ।
7. Op. cit., महाभूमि-पति··· ।
8. Op. cit., भुक्त्वा तु विपुलान् भोगान् । 9. Op. cit., लभते ।
10. A. दिव-च्युतः । 11. Op. cit., मुक्ताढ्य-कुले in MatP.
12. cp. SkanP., काशी-खण्ड, पूर्वार्ध, p. 2219, chap. 27,
"अकामो वा सकामो वा तिर्यग्योनि-गतोऽपि वा ।
गङ्गायां यो मृतो मर्त्यो नरकं स न पश्यति ॥"

सुप्तोऽसौ प्रतिबुध्यते। हंस-सारस-युक्तेन विमानेन स गच्छति॥ ततः स्वर्गात् परिभ्रष्टः क्षीण-कर्मा दिवश्च्युतः। सुवर्ण-मणि-मुक्ताढ्ये जायते विपुले कुले[1]॥" तथा—"गङ्गा-यमुनयोर्मध्ये [पुरी (?) करी] षाग्निन्तु कारयेत्। अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रिय समन्वितः॥ यावन्ति रोम-कूपाणि तस्य गात्रे तु धीमतः। तावद्वर्ष-सहस्राणि स्वर्ग-लोके महीयते॥ ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीप-पतिर्भवेत्। स भुक्त्वा विपुलान् भोगांस्तत्तीर्थं लभते पुनः[2]॥"

तथा—"यस्तु देहं निकृत्य स्वं शकुनिभ्यः प्रयच्छति। विहगैरुपभोक्तव्यः शृणु तस्यापि यत् फलम्॥ शतं वर्ष-सहस्राणां सोम-लोके महीयते। तस्मादपि परिभ्रष्टो राजा भवति धार्मिकः॥ गुणवान् रूप-सम्पन्नो विद्वांश्च प्रिय-वादकः। भुक्त्वा तु विपुलान् भोगांस्तत्तीर्थं लभते पुनः[3]॥" तथा—"शृणु राजन् प्रयागे तु अनशन-फलं विभो। प्राप्नोति पुरुषो धीमान् श्रद्दधानो जितेन्द्रियः॥ अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रिय-समन्वितः। अश्वमेध-फलं तस्य गच्छतस्तु पदे पदे॥ कुलानि तारयेद्राजन् दश पूर्वान् दशापरान्। मुच्यते सर्व-पापेभ्यो गच्छेच्च परमं पदम्[4]॥ पञ्च-योजन-विस्तीर्णं प्रयागस्य तु मण्डले।

1. MatP., p. 319, chap. 107, vv. 4-6.

2. Op. cit., v. 9; v.r. करीषाग्निं यस्तु साधयेत्।···गात्रे तु देहिनः। स्मरते पुनः।

3. MatP., chap. 107, vv. 17-19, p. 320; v. r. यः स्वदेहन्तु कर्तित्वा। विहगैरुपभुक्तस्य···॥···भोगांस्तत्तीर्थे भजते पुनः।

4. MatP., chap. 103, vv. 3-5, p. 320; v. r. अनाशक-फलं विभो। अहीनाङ्गोऽप्यरोगश्च।···गच्छेत्तु परमं पदम्।

अतीतान् पुरुषान् सप्त भाविनस्तु चतुर्दश। नरस्तारयते सर्वान् यस्तु प्राणान् परित्यजेत्[1] ॥"

तथा—"येनैव निःसृता गङ्गा तेनैव यमुना गता[2]।" इदमुपक्रम्य—"प्राणांस्त्यजति यस्तत्र स याति परमां गतिम्[3]।" तथा—"[4]आपत्तीर्थमिति ख्यातं दक्षिणे यमुना-तटे। पश्चिमे धर्मराजस्य तीर्थन्तु नरकं स्मृतम्। तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः[4] ॥"

तथा—यमुनोत्तर-तटमुपक्रम्य—"अन्ये च बहवस्तीर्थाः सर्व-पापहराः शुभाः। तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः[5] ॥ गङ्गा च यमुना चैव उभे तुल्य-फले स्मृते। केवलं ज्येष्ठ-भावेन गङ्गा सर्वत्र पूज्यते ॥"

तथा—"जन्मान्तर-सहस्रेण[6] योगी लभ्येत वा नवा[7]। यथा योग-सहस्रेण योगी लभ्येत वा नवा[8] ॥ यस्तु सर्वाणि रत्नानि ब्राह्मणेभ्यः प्रयच्छति। तेन दानेन दत्तेन योगी लभेत्तत वा नवा[9]। प्रयागे तु मृतस्येदं सर्वं भवति नान्यथा[10] ॥"

---

1. Op. cit., vv., 9-10; v. r.…विस्तीर्णं…मण्डलं।…सप्त भविष्यांश्च चतुर्दश। After विस्तीर्णं…मण्डलं, there is an additional line in the MatP., प्रविष्ट-मातृं तद्भूमावश्वमेधः पदे पदे। 2. Op. cit., v. 24.

3. Op. cit. v 26B. 4-4. Op. cit., v. 29.

5. Op. cit., vv. 31-32, v. r., पापहराः स्मृताः।

6. Op. cit, सहस्रेभ्यो। 7. Op. cit, लभ्येत मानवैः।

8. Op. cit, मानवैः। 9. Op. cit, योगं नाप्नोति मानवैः।

10. "जन्मान्तर—नान्यथा", op. cit., chap 110, vv. 10-12.

प्रयागं स्मरतोऽन्यत्रापि मरणे फलं तत्रैव—"देशस्थो यदि वाऽरण्ये विदेशे यदि वा गृहे। प्रयागं स्मरमाणोऽपि यस्तु प्राणान् परित्यजेत् ॥ ब्रह्म-लोकमवाप्नोति वदन्ति ऋषि-पुङ्गवाः। सर्व-काम-फला वृक्षा मही यत्र हिरण्मयी ॥ ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छति। स्त्री-सहस्राकुले रम्ये मन्दाकिन्यास्तु वै शुभे ॥ मोदते ऋषिभिः सार्धं स्व-कृतेनेह कर्मणा। सिद्ध-चारण-गन्धर्वैः पूज्यते दिवि दैवतैः ॥ ततः स्वर्गात् परिभ्रष्टो जम्बु-द्वीप-पतिर्भवेत्। ततः शुभानि कर्माणि चिन्तयानः पुनः पुनः ॥ रूपवान् वित्त-सम्पन्नो भवतीति न संशयः। कर्मणा मनसा वाचा तस्य धर्मो व्यवस्थितः[1] ॥"

विघ्न-प्रकरणम्।

स्मृतिः—"षष्टिर्विघ्न-सहस्राणि गङ्गां रक्षन्ति सन्ततम्[2]। निवारयन्त्यभक्तांस्तान्[3] पाप-कर्म-रतांस्तथा[4] ॥ काम-क्रोध-महामोह-लोभादि-निशितैः शरैः। प्रहरन्ति मनस्तेषां स्थितिं वै नाशयन्ति च ॥" कालिका-पुराणे—"रुद्रेण रक्ष्यते देवी मोहयित्वा तु मानवान्। येन साधारणी बुद्धिर्गङ्गायामपि जायते ॥"

---

1. Op. cit., chap. 105, vv. 10-12., vv. 8(b)—14(a), p. 313; v. r.,···विदेशस्थोऽथवा गृहे...मन्दाकिन्यास्तटे शुभे··· सुकृतेनेह कर्मणा।···ततः शुभानि कर्माणि···गुणवान्···। धर्मः सत्य-प्रतिष्ठितः ॥ V. r. also in C. गुणवान् वित्त।

2. C. नित्यशः।

3. C. निवारयत्यभक्तांश्च।  4. PrāyT., p. 92, ll. 6-7.

अथ प्रतिषिद्ध[1]-प्रकरणम् ।

भविष्ये[2]—

"गङ्गा-भक्ति-रतस्त्वस्थि-शृं भास्वद्-मांस-सञ्चयान् ।
उच्छिष्टं न क्षिपेदापो[3] हस्त-पादैर्न ताडयेत् ॥"

ब्रह्माण्डे—

"गङ्गां पुण्य-जलां प्राप्य त्रयोदश विवर्जयेत् । शौचमाचमनं नाम नैर्माल्यं मल-घर्षणम् ॥ गात्र-संवाहनं क्रीडां प्रतिग्रहमथारतिम् । अन्य-तीर्थ-रतिश्चैव अन्य-तीर्थ-प्रशंसनम् । वस्त्र-त्यागं तथा घातं सन्तारञ्च विशेषतः[4] ॥" स्कान्दे—"नाभ्यङ्गितः प्रविशेत्तु गङ्गायां न मलार्दितः । न जल्पन् न मृषा वीक्षय वदन्ननृतं वचः[5] ॥" 'मृषा वीक्षन्' इतस्ततः इति ।

ब्राह्मे—"स्नायीत तैलवान् प्राज्ञ[6]स्तट-भूमिमुपेयिवान् ।" 'तट-भूमि'[7] निकट[8]भूमिं गत्वा जलान्तरे गात्रादि-प्रक्षालनं कृत्वा स्नात्वा पश्चाद् गङ्गायां स्नायादित्यन्वयः[9] । अन्यथा दोष-द्वयापत्तेः । एको[10] निषिद्धाचरणम् [ अन्यः ] स्नान-फलाभावश्च, मल-कर्षणत्वात् ।

1. C. निषिद्ध ।
2. भविष्ये omitted in A.
3. C. क्षिपेच्चापो ।
4. PrayT., p. 98, ll. 2-6, v. r.,···चतुर्दश विवर्जयेत्··· शौचमाचमनं सेकं निर्माल्यं···वस्त्र त्यागमथाघातं ·· ।
5. A. नरः । PrayT., p. 98, ll. 12-16 ; v. r. नाभ्यङ्गितश्च तु प्रविशेद् गङ्गायां··· ।
6. Op. cit., v. r. तैलवान् विप्र...।
7. तट-भूमि not found in A.
8. A. निकट-वर्ति ।
9. C स्नानायादित्यर्थः ।
10. C. एकस्मिन् ।

तथा च गरुड-शङ्खौ—"नित्यं नैमित्तिकं चैव क्रियाङ्गं मल-कर्षणम् । तीर्थाभावे[1] तु कर्तव्यमुष्णोदक-परोदकैः[2] ॥" 'नित्यं' प्रातः-स्नान-परम्, 'नैमित्तिकं' चण्डालादि-स्पर्श-निमित्तम्। 'क्रियाङ्गं' जपादि-कर्माधिकार-हेतुः। 'मल-कर्षणम्' अभ्यङ्ग-पूर्वकम्। ज्योतिः-शास्त्रोक्तं पुण्य-स्नानादि काम्यम्, नद्याधारकं फलार्थं क्रिया-स्नानत्वादाय अङ्गेन षोढा स्नानमुक्तम्।

अत्र क्रिया-स्नान एवायतन-धर्मो विहितः। प्रातः-स्नाने "यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः"[3] इ [त्य] तिदेश-धर्मः अत्राहरहः स्नाने कात्यायनाद्युक्तः। स्नानान्तराणि मज्जन-मात्र-रूपाणि, धर्म-सम्बन्धे प्रमाणाभावात्। न चातिदेशः सर्वधामकर्मत्वे विशेषोद्देशेन धर्म-विधिर्निरस्यते। न च गुण-फलविशेष-स्तदभावात् अपि धर्माभाव उक्तः। काम्य-पुण्य-स्नान-मलापकर्षणयोस्तु लौकिकयोः "लौकिकं लौकिक-धर्माङ्गमि"ति दक्ष-सूत्रेण साधितत्वात् नालौकिकाङ्गं सम्बन्धः क्रियाङ्ग-स्नानेऽप्यद्भिरेव शुद्ध्यतीत्यभिधानाद्धर्माभावः। अत एवाह हेत्वन्तर-प्रयुक्ते निमज्जन-मात्रेऽपि क्रिया-स्नानस्य पृथगनुष्ठानं हरिहरोऽपि

1. C. तीर्थाभावेऽपि।

2. AhnT., p. 90, ll. 10-11, स्नान-प्रकरण, "यमः"; v. r. क्रियाङ्ग-मल-कर्षणम्। For S'ankhaS., see SmrSam., p. 280, chap. 8, v. 1, 2nd. line, क्रिया-स्नानं तथा षष्ठं षोढा-स्नानं प्रकीर्तितम्। For explanations of these types of baths, see SankhaS., op. cit., vv. 2-7. *This eighth chapter of the SankhaS is missing in some editions of the same.*

3. KatS., 10. 1, p. 312; see also AhnT, चतुर्थयामार्ध-कृत्य, p. 355 of Jīvānanda's ed.

क्रिया-स्नान-पृथक्-स्नानयोरेव धर्ममाह क्रियास्नानं किन्तु इदं फलार्थिं तया कथितमप्यहरहः-स्नानादभिन्नं तत्रापि पाप-चय-रूपस्य फलस्य सत्त्वादिति भट्टनयेन[1] विशेषमाह। अत एव फलाभाव-प्रसङ्गात् अभक्तो न स्नायादित्यर्थः।

मात्स्ये—"यस्तीर्थं प्रतिगृह्णीयात् तीर्थेष्वायतनेषु च। हिरण्यं रजतं ताम्रं यच्चान्यदपि किञ्चन। निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते॥" स्मृतिः—"गङ्गा-विक्रयणाद्राजन् विक्रीतः स्याज्जनार्दनः। जनार्दने तु विक्रीते विक्रीतं भुवन-त्रयम्॥" भविष्ये—"गङ्गाया महिमानं ये न मन्यन्ते नराधमाः। कुतार्किका नास्तिका ये ते वै रौरवगामिनः॥" 'कुतार्किकाः' विकल्पिकाः[2] वेदार्थस्यान्यथा कल्पका इत्यर्थः, 'न मन्यन्ते' इति स्तुति-वाद इति ये मन्यन्ते।

तथा—"गङ्गां प्राप्यापि ये मर्त्याः प्रीयन्ते न रमन्ति च[3]। न तारयति तान् गङ्गाऽभक्तान् पाप-रतांस्तथा[4]॥" मात्स्ये—"गङ्गां प्राप्यापि ये मर्त्याः शुद्धां भक्तिं न कुर्वते। तीर्थान्तरे रतिं कुर्युस्ते वै निरयगामिनः॥" तथा—"सर्वोत्तमां महादेवीं सर्वोत्कृष्टां वरप्रदाम्। अन्य-तीर्थ-समां कुर्युस्ते वै निरयगामिनः॥" तथा—"भागीरथीं महापुण्यां गङ्गां त्रिपथगामिनीम्। अन्य-तीर्थ-समां ज्ञात्वा कुम्भीपाकेषु मज्जति॥" पाद्मे—"अन्य-तीर्थ-समां गङ्गां यो ब्रवीति नराधमः। स याति नरकं घोरं रौरवं दारुणं महत्॥"

स्कान्दे—"गङ्गा-तीरं परित्यज्य येऽन्य-तीर्थाभिलाषिणः। ब्रह्महत्या फलं तेषां सततं संग्रयात्मनाम्॥" भविष्ये—"गङ्गा-

1. C. उत्तरार्द्धे
2. A. विलुम्पकाः।
3. A. न नमन्ति च;
4. A. पापरतास्तथा।

तीर्थं परित्यज्य येऽन्य-तीर्थाभिलाषिणः तीयान्तरे रतिर्येषां ते वै रौरवगामिनः[1] ॥"

यावत् स्वर्ग-तरङ्गिणी हर-जटाजूटान्तरालम्बते[2]
यावद्विश्व-विकाशि-विस्तृत-चारः सूर्यो ऽयमुज्जृम्भते ।
यावन्मण्डलमैन्दवं वितनुते शम्भोः शिरोमण्डनं
तावत् कल्पलतेयमस्तु सफला देव्याः सतां श्रेयसे ॥
कियन्निबन्धमालोक्य श्रीविद्यापति-सूरिणा ।
गङ्गा-वाक्यावली देव्याः प्रमाणैर्विमलीकृता ॥

इति समस्त-प्रक्रिया-विराजमान-दानदलित-कल्पलताभिमान-भव-भक्ति-भावित-बहुमान-महा-महादेवी-श्रीमद्विश्वास-देवी-विरचिता गङ्गा-वाक्यावली समाप्ता ॥ इति ।

1. PrayT., chap. गङ्गा-माहात्म्य, p. 92, ll. 4–5.
2. C. जूटान्तमालम्बते ।

## FURTHER REFERENCES, VARIANT READINGS AND NOTES.

*The headings in bold type in this Appendix refer to the pages, lines, verses and passages of the Gaṅgā-vākyāvalī. The references here together with those in the foot-notes of the GV. make our search for the sources and variant readings of the verses and the passages quoted in the Gaṅgā-vākyāvalī complete. The verses and prose-passages, either parallel to or identical with those in the Gaṅgāvākyāvalī, have been also traced in various Purāṇas, Astrogical works, and Smṛtis, particularly the Nibandhas, etc., a complate list of which will be found in the Bibliography.*

**P. 108, l. 9. महद्व्ययफलं कर्म**, etc.

ParāM., I, I, p. 182, l. 3.

**P. 108, l. 11. अश्रद्धया हुतं सर्वं**, etc.

See also p. 139 of this book. PadmaP., उत्तर-खण्ड, 126. 25, p. 451 and स्वर्ग॰, 14. 68, p. 96.

**P. 109, l. 1. सहस्र-योजनस्थाश्च**, etc.

KṛtyaSS., p. 230, v. r. गङ्गा गङ्गेति च ब्रूयुर्मुच्यन्तेऽपि च पातकात् ।

**P. 109, ll. 8-9. मनसा संस्मरेद् यस्तु**, etc.

VarṣaKK., p. 534 ; VīraM., तीर्थ-प्रकाश, p. 363.

**P. 109, ll. 12-13. भवनानि विचित्राणि**, etc.

Prāy T., chap, गङ्गा-माहात्म्य, p. 70, ll. 12-14.

**P. 109, ll. 16-17. गच्छंस्तिष्ठन् स्वपन् जाग्रत्** , etc.

PrāyT., p. 70, ll. 11-12, v. r. गच्छंस्तिष्ठन् स्वपन् ध्यायन् जाग्रद्... स च मुच्येत...।

**P. 110, ll. 7-8. स्मरणादेव गङ्गायाः, etc.**

SkanP., काशी-खण्ड, 27. 35, p. 2217.

**P. 110, l. 13. दर्शनात् स्पर्शनात् पानात्, etc.**

AgniP., 110. 6, p. 238 ; only the first line ; ViraM., तीर्थ-प्रकाश, p. 363 "महाभारते" ; VarsaKK., p. 534, v. r....स्पर्शनात्रापात् ।

**P. 110, l. 17. गङ्गा गङ्गेति यैर्नाम, etc.**

ViraM., तीर्थ प्रकाश, p. 17, v. r. शतैरपि...जन्म-त्रयार्जितं ।

**P. 111, l. 6. सहस्र-योजनस्थोऽपि, etc.**

VarsaKK., p. 534, "महाभारते" ।

**P. 112, ll. 3-4. वृथा कुलं वृथा विद्या, etc.**

SkanP., काशी-खण्ड, 27. 32, p. 2217 ; ViraM., समय-प्रकाश, p. 261, v. r. वृथा यज्ञाः...वृथा दानानि...।

**P. 112, ll. 12-13. पितरो योगिनश्चैव, etc.**

SkanP., काशी-खण्ड, 27. 76, p. 2219.

**PP. 113-119. अथ यात्रायां कर्तव्य-कर्म । तत्र स्कन्द-धृते महाभारतीये, ऋषिभिः क्रतवः प्रोक्ताः, etc.**

Same as TirthaC, pp. 1. l. 11—10. l. 17, तत्र महाभारते, etc.

**P. 113, ll. 3-16. ऋषिभिः क्रतवः प्रोक्ताः, etc.**

TirthaC., p. 1. Lines 6-8 of GV. are found in the Krtya-SS., p. 214.

ViraM., तीर्थ-प्रकाश, p. 12, "महाभारते" ; v. r. फलञ्चैव तथा तत्त्वं...प्राप्यन्ते पार्थिवैरेते...नार्थ-न्यूनैरवगणैः...गुह्यमिदं भरत-सत्तम ।...दरिद्रो नाम जायते ; even the language of the interpretations of the

words "अवगणीः", "एकात्मभिः", "असंहतैः", "अनुपोष्य त्रिरात्राणि", etc. is identical with that of the same in the GV.

*As the Vīra-mitrodaya quotes from the Gaṅgā-vākyāvali, citing it by name, Mitra Miśra was certainly much influenced by it. But it is curious that though at times he quotes verbatim the interpretations given in the GV., he does not acknowledge his gratitude to Viśvāsadevī.*

Vidhā P., third stavaka, vol. II, p. 724, v. r....दरिद्रो नाम जायते ; only the last verse but one is found here.

P. 113, ll. 17-21. अज्ञानेनापि यस्येह, etc.

VīraM., तीर्थ-प्रकाश, p. 15 ; v. r....ऐश्वर्य-ज्ञान-सम्पन्नः ; VidhāP., vol. II, stavaka III, p. 724 : v. r., ऐश्वर्य-ज्ञान-सम्पन्नः सदा भवति धर्मवान् । पितरस्तारितास्तेन नरकाच्च पितामहाः ॥ TirthaC., p. 2.

P. 114, ll. 5-6 & 21-22. यस्य हस्तौ च पादौ च, etc.

VīraM., आह्निक-प्रकाश, p. 183, "शङ्खः" ; v. r., मनश्चापि सुसंयतम् ; the interpretations of विद्या and कीर्त्ति in this work and GV. are indentical, the language also being the same ; the interpretations of VīraM. and GV. are almost identical in language ; BhavP., उत्तर-खण्ड, 122-3, p. 484 (b.,) : SkanP., काशी-खण्ड, पूर्वार्ध, 6. 48, p. 2086 ; BrahmaP., 25. 2, p. 119; and 76. 20:VāyuP., 110. 5, p. 742, v. r. मनश्चापि ; and also the PrāyT., chap. गङ्गा-माहात्म्य, p. 75, ll. 2-4; PadmaP., उत्तर-खण्ड, 117. 25, p. 404. ; SkanP., रेवा-खण्ड, 227. 29-30 p. 3644 ; SmṛtiC., आह्निक-काण्ड, p. 347 : TirthaC., p. 2 ; Vidhā P., vol. II, third stavaka, p. 745, "शङ्खः" ।

P. 114, ll. 11-14. प्रतिग्रहादपावृत्तः, etc.

SkanP., काशी-खण्ड, op. cit., vv. 49-50, p. 2086 : v. r. प्रतिग्रहादुपावृत्तः...। अदम्भको...सर्व-सङ्गैर्यः । VāyuP., 110. 4, p.

742; v. r....सन्तुष्टो नियतः शुचिः। अहङ्कार-विमुक्तो यः...। PrāyT., गङ्गा-माहात्म्य, p. 74, ll. 4-7. VidhāP., vol. II, third stavaka, p. 745, v. r.,...उपावृत्तः...दुष्ट-संसर्गैः। TīrthaC., p. 3.

**P. 114, ll. 8-19. अकोपनश्च राजेन्द्र, etc.**

SkanP., काशी-खण्ड, पूर्वार्ध, 6. 51. p. 2086, v. r. अकोपनोऽमलमतिः...; and रेवा-खण्ड, 227. 30-31, p. 3644; VīraM., तीर्थ-प्रकाश, p. 13; VidhāP., vol. II, third stavaka, p. 745; v. r. अकोधनश्च राजेन्द्र सत्य-शीलो...; TīrthaC., p. 3.

**P. 115, ll. 3-8. तीर्थान्यनुस्मरन् धीरः, etc.**

The interpretations of VīraM. and GV. are almost identical in language: VīraM., तीर्थ-प्रकाश, p. 14; v. r. तीर्थान्यनुसरन् ...कृत-पापो विशुध्येत...शुद्ध-कर्मकृत...न गच्छेत्...न च जायते...स्वर्गी भवति वै विप्रो...; SkanP., काशी-खण्ड, पूर्वार्ध, 6. 52-54, v. r. कृत-पापो विशुध्येत...तिर्यग्योनिं न वै गच्छेत्...न दुःखी स्यात्...स्वर्ग-भाक् च...मोक्षोपायञ्च...; TīrthaC., p. 4. VidhāP., vol. II, third stavaka, p. 725.

**P. 115, ll. 7-8. अश्रद्दधानः पापात्मा, etc.**

PadmaP., उत्तर-खण्ड, 117. 26, p. 404.

**P. 115, ll. 11-12. नृणां पाप-कृतां तीर्थे, etc.**

SkanP., काशी-खण्ड, पूर्वार्ध, 6. 62, p. 2087; VīraM., आह्निक-प्रकाश, p. 183. "शङ्खः"। SmṛtiC., आह्निक-काण्ड, p. 347.

**P. 115, ll. 15-16. कामं क्रोधञ्च लोभञ्च, etc.**

MahBh., अनुशासन-पर्व, 25. 65: v. r....तीर्थमावसेत्। न तेन किञ्चिन्न प्राप्तं...। VīraM., तीर्थ-प्रकाश, p. 15; v. r.,...तीर्थमावसेत्। न तेन किञ्चिन्न प्राप्तं...। VidhāP., third stavaka, vol. II, p. 745. v. r. न तेन किञ्चिदप्राप्यं...।

**P. 115, ll. 17-18. तीर्थानि च यथोक्तेन, etc.**

SkanP., काशी-खण्ड, पूर्वार्ध, 6. 35, p. 2087; v.r. ...स्वर्ग-भागिनः। ViraM. तीर्थ-प्रकाश, p. 15; v.r. तीर्थानि तु...।

**P. 115, ll. 20-22. गङ्गादि-तीर्थेषु वसन्ति सन्तः, etc.**

VidhāP., third stavaka, p. 747 : v. r....पक्षि-सङ्घाश्च राजन्... देवायतनाच्च तस्मात्...। TirthaC, p. 5. KṛtyaSS., p. 215.

**PP. 115, l. 21—116, 1-3. या तीर्थ-यात्रा कथिता मुनीन्द्रैः, etc.**

ViraM., तीर्थ-प्रकाश, p. 19; v. r. प्रयुक्ताऽप्यनुमोदिता च।...सर्वस्व-नाशो...सद्ब्राह्मणानभ्रत...परिभ्रमेत...तीर्थेष्वलं यज्ञ-फलं हि यस्मात्...गृह-स्थाश्रम-संस्थितस्य। TirthaC., pp. 5-6

**P. 116, ll. 3-4. यस्येष्टि-यज्ञेष्वधिकारितास्ति, etc.**

VidhāP., third stavaka, vol. II, p. 727 ; v. r., गृहस्थाश्रम-संस्थितस्य...

**P. 116, ll. 8-12. यो यः कश्चित्तीर्थ-यात्रान्तु गच्छेत्, etc.**

ViraM., तीर्थ-प्रकाश, pp. 23-24; v. r., स तु कुर्वन्...धीमान् विप्रो वित्त-शङ्कया...। VidhāP., third stavaka, vol. II, p. 740; v. r. as above. CaturVC., श्राद्ध-कल्प, p. 1581, प्रत्यागतश्चाथ गृहं पुनस्तु देवान् पितॄन् ब्राह्मणान् पूजयेच्च। एवं कुर्वंस्तस्य तीर्थाद्यदुक्तं फलं तत् स्यान्नात्र सन्देहकोऽस्ति। The ViraM. and VidhāP. also take एवं कुर्वंस्तस्य (v. r. कुर्वतस्तस्य)...सन्देहकोऽस्ति (v. r. सन्देहमस्ति, सन्दिग्धमस्ति) as a continuation of the topic in the BrahmaP, PrāyT., chap. गङ्गा-माहात्म्य, p. 71, ll. 5-6, v. r....ब्राह्मणांश्च साधून् धीमान् प्रीणन् वित्त-शङ्कया प्रयत्नात्।

**P. 116, ll. 12-15. एवन्तु कुर्वतस्तस्य, etc.**

Found in PrāyT., pp. 71, l. 19—72, l. 2, in a modified form ; तु omitted there ; सन्देहोऽस्ति read as सन्देह

एव ; इति omitted after सुसंयतः ; पार्वणाव substituted by वृद्धि-श्राद्ध and ब्राह्मणान् पूजयेत् by ब्राह्मणान् भोजयेत् । By वृद्धि-श्राद्ध here, Raghunandana recommends that while starting for an holy place, one should perform the वृद्धि-शाद्ध । His reading "भोजयेत्" is better because feeding the Brāhmaṇas at the end of rites is generally recommended. The direction to feed Brāhmaṇas agrees with the regulation repeated in the Gaṅgā-vākyāvalī itself ("पूर्ववद्भोजयित्वा, p. 119, l. 12). This involves a contradiction in statements which may be avoided if this पूजयेत् be not taken to include the sense of "भोजयेत्" as well which would be rather a far-fetched explanation. The word सन्तर्पयेत् in the verse (l. 10, p. 116) means भोजयेत् specifically in the case of ब्राह्मणान् ; so the भोजन is to be repeated here as well (cf. प्रत्यागतश्चापि पुनस्तथैव) ।

**P. 116, ll. 16-17. गच्छन् देशान्तरं यस्तु, etc.**

BhaVP., ब्राह्म-पर्व, 183. 18. v. r. गच्छेद्देशान्तरे यस्तु श्राद्धं कुर्यात्तु सर्पिषा । तदन्नार्थमिति प्रोक्तं प्रदिशेच न संशयः । Srād V., p. 63, ll. 6-7, "भविष्ये", v. r......गच्छन् देशान्तरं यः श्राद्धं कुर्याच्च सर्पिषा । VidhāP., third Stavaka, vol. II, p. 744, "विष्णु-पुराण", v. r. गच्छेद्देशान्तरं यस्तु...कुर्यात् स... ; VīraM., तीर्थ-प्रकाश, p. 25, and श्राद्ध-प्रकाश, p. 332, v. r., गच्छेद्देशान्तरं...कुर्यात्तु सर्पिषा ; ŚrāddhaKL., p. 7, v. r....यच्च श्राद्धं कुर्यात्तु... ; ParāM., vol. I, part II, आचार-काण्ड, p. 301, "पारस्कर", v. r., यदि श्राद्धं कुर्यात्तु...तदात्वार्थमिति प्रोक्तं ; NirS., p. 266, l. 18., v. r. श्राद्धं कुर्यात्तु...।

The interpretations of the verse given in the GV. and Vīra-mitrodaya are identical even in words, but Mitra Miśra gives an additional information "अत एव गणेश्वर-मिश्रादयोऽप्येव-

मिति वाचस्पति-मिश्रा लिखन्तिस्म"; vide VīraM., तीर्थ-प्रकाश, p. 27, ll. 11-14. ŚrāddhaC., p. 136 : ŚrāddhaKK., p. 268.

**P. 116, ll. 21-22. प्रयागे तीर्थ-यात्रायां,** etc.

Prāy T., p. 80, ll. 5-6 ; VīraM., तीर्थ-प्रकाश, p. 28. v. r., ...न वृथा। Whereas GV. says "स्मृति-समुच्चय-लिखित-वचनात्", the VīrM. says "स्मृति-समुच्चय-लिखित-विष्णु-वचनात्"। Vidhā P., third Stavaka, vol. II, p. 748, v. r. ...मातापितृ-वियोगतः। NirS., p. 358, l. 15, v. r....वपनं कुर्यादथा न।

**P. 117, ll. 3-7. उद्यतश्चेद् गयां गन्तुं,** etc.

SmṛtiC., श्राद्ध-काण्ड, p. 152, "ब्रह्मकैवर्त",v. r, उद्यतस्तु...विधाय कर्म-शेषञ्च ग्रामं कृत्वा...प्रतिदिनं गच्छेच्छ्राद्ध-शेषान्नभुङ् नरः। VidhāP., third stavaka, vol. II, p. 748, v. r., उद्यतस्तु...कार्पटी-वेशं ग्रामं कृत्वा प्रदक्षिणम्। ततः प्रतिदिनं...। Śrāddha C, p. 137, VīraM., तीर्थ-प्रकाश, p. 29,...कार्पटी-वेशं...ग्रामं...ततः प्रतिदिनं...फलं स्यात्; NirS., p. 358, l. 28. v. r. उद्यतस्तु...कार्पटी-वेशं ग्रामं गत्वा प्रदक्षिणम्। ततः प्रतिदिनं...; TīrthaC., pp. 7-8; CaturVC., श्राद्ध-कल्प, pp. 1582-83, v. r. उद्यतस्तु...कर्पटी-वेशं ग्रामस्यापि...कृत्वा प्रतिदिनं...। *The 7th line is not found in the* VidhāP., NirS., SmṛtiC., CaturVC. and ŚrāddhaC.

**P. 117, ll. 8-15. एतस्यैवान्यत्रापि...अन्यत्र फल-कल्पनं... उपस्थिति-गौरवात्।**

TīrthaC., p. 7, l. 17 p. 8, l. 2, language of G V. and TīrthaC. identical; v. r. कार्पटी-वेश-धारणं...VīraM., तीर्थ-प्रकाश, p. 29, ll. 13-18 ; the VīraM. quotes these lines as taken from Vācaspati Miśra, but it omits the first line ; v. r. in VīraM. विश्वजिन्न्यायादत्र फल-कल्पनम्।

**P. 117, ll. 16-22. "कथयिष्यामि ते वत्स" etc.**

MatP., 106. 3-5 & 7. p. 315 ; v. r. ते राजंस्तीर्थ...। आर्षेण विधिनाऽनेन......। क्रोशा हि दारुणे। ऐश्वर्य-लोभ-मोहाद्वा। VīraM., तीर्थ-प्रकाश, p. 33 ; v. r. ऐश्वर्य-लोभ-मोहाद्वा। VidhāP., third stavaka. Vol. II, p. 738. "कौर्मे" v. r...तीर्थ-यात्रा-विधि क्रमात् ;... बलीवर्दं समारुह्य...सलिलं न च गृह्णन्ति...ऐश्वर्य-गर्वान्मोहाद्वा...विफलं तस्य तत्तीर्थं तस्माद्यानेन न व्रजेत्। Additional line after आर्षेणैव ...यथाश्रुतं,—प्रयाग-तीर्थ-यात्रार्थी यः प्रयाति नरः क्वचित्। SmṛtiR., p. 51, l. 3, only the last two lines, "स्मृति-रत्ने", "ऐश्वर्य-लोभ-मोहाद्वा गच्छेद्यानादिभिस्तु यः...यानादि वर्जयेत्" ; CaturVC., श्राद्ध-कल्प, p. 1582, only one verse, "कूर्म-पुराणे" ;...आर्षेण तु विधानेन।

**P. 118, ll. 3-4. गो-याने गो-वधः प्रोक्तः, etc.**

VīraM., तीर्थ-प्रकाश, p. 34 ; Vidhā P., third stavaka, vol. II, p. 730, TīrthaC., p. 8. KṛtyaSS., p. 215.

**P. 118, ll. 7. "अर्धं हरति पादुका"**

The complete verse has been quoted from the Smṛti-ratna in the Smṛti-ratnākara, p. 51, ll. 2-3. "छत्रं तु हरते पादमर्धं हरति पादुका। यानं हरेत्त्रिपादं तु सर्वं हरति दोलिका॥" Tīrtha C., p. 8, v. r. ऊर्ध्वं हरति पादुका।

**P. 118, ll. 10-11, वर्षातपादिके छत्री etc.**

MadanaP., p. 126 ; v. r. वर्षातपादिषु ; VīraM., तीर्थ-प्रकाश, p. 34. TīrthaC., pp. 8-9. KṛtyaSS., p. 215.

**P. 119, ll. 15-16. तीर्थं प्राप्यानुषङ्गेण, etc.**

ŚaṅkhaS., p. 381 of SmṛtiSam. chap. 8, v. 12 ; v. r. स्नानजं फलमाप्नोति ; PrāyT., p. 75, ll. 1-2 ; v. r. as before. SmṛtiC., आह्निक-काण्ड, p. 347. SkanP., v. 61, p. 2087 : v. r....स्नानं तीर्थे

समाचरेत्......तीर्थ-यात्राश्रितं न तु। VīraM., तीर्थ-प्रकाश, p. 16, v. r. स्नानजं फलमाप्नोति। NirS., p. 359, ll. 11-12, v. r. स्नानजं फलमाप्नोति। तीर्थ-यात्रा-कृतं न तु......। VidhāP., vol. II, third stavaka, p. 766, v. r. तीर्थ-यात्रा-कृतं...ŚrāddhaC., p. 135,...तीर्थं प्राप्य प्रसङ्गेन...समाचरेत्। स्नानजं फलमाप्नोति तीर्थ-यात्रा-कृतं न तु॥

**P. 119, ll. 19-20. षोडशांशं स लभते, etc.**

PrāyT., p. 75, ll. 13-15 ; v. r......अर्धं तीर्थ-फलं...। SkanP., v. 63, p. 2087 ; v. r. यः परार्थेन गच्छति। अर्धं तीर्थ-फलं.........। ŚrāddhaC., p. 135,......यः परार्थेन...अर्धं तीर्थ-फलं...। VīraM., तीर्थ-प्रकाश, p. 36, l. 6, v. r. same as ŚrāddhaC. ; NirS., p. 659, l. 6, only the second line. VidhāP., p. 750, vol. II, v. r. अर्धं ; SmṛtiC., आह्निक-काण्ड, p. 647

**P. 120, ll. 5-6. स्नानन्तु भक्त्या गङ्गायां, etc.**

VīraM., तीर्थ-प्रकाश, p. 363

**P. 120, ll. 18-19. गङ्गा-स्नानं करोमीति etc.**

VarṣaKK., p. 536 ; v. r. अशक्तस्य स्वयं......।

**P. 121, ll. 1-2. स तया श्रद्धया भक्त्या, etc.**

VarṣaKK., p. 536 ; v. r. श्रद्धया युक्तः।

**P. 121, ll. 5-6. ये गच्छन्ति स्वतो गङ्गां, etc.**

PrāyT., p. 71, ll. 5-7

**P. 121, ll. 17-18. तीर्थं गच्छंस्त्यजेत् प्राज्ञः, etc.**

VīraM., तीर्थ-प्रकाश, p. 40

**P. 122, ll. 3-4. नरकं दारुणं श्रुत्वा, etc.**

VīraM., तीर्थ-प्रकाश, p. 40 ; v. r. परान्ने तु......यस्यान्नमिहाश्नाति ......किल्बिषम् ।

**P. 122, ll. 6-8. अप्येक-पंक्त्या नाश्नीयाद् , etc.**

AhnikaT., p. 233, ll. 6-8 ; v. r......नाश्नीयात् संवृतः...... । भस्म-स्तम्ब.........मार्गैः पंक्तिश्च भेदयेत् । ParāM., 1. 1. p., 429, "बृहस्पति",......पंक्त्यां......ब्राह्मणैः स्वजनैरपि । The last line is replaced in ParāM. by "अग्निना भस्मना चैव स्तम्भेन सलिलेन च । द्वारेण चैव मार्गेण पंक्ति-भेदो बुधैः स्मृतः ॥"

**P. 123, ll. 10-11. भूतानामिह सर्वेषां, etc.**

MahBh., अनुशासन-पर्व, 26. 43. v. r...गतिमन्वेषमाणानां न गङ्गा-सदृशी गतिः । VīraM., तीर्थ-प्रकाश, p. 360 ; v. r.........दुःखोपहित-चेतसाम् ।......न गङ्गा-सदृशी । TirthaC., p. 190.

**P. 124, ll. 10-11. जात्यन्धैरेव तुल्यास्ते, etc.**

MahBh., 13. 26. 67.

**P. 122, ll. 13-16. शुचि-वस्त्र-धरः स्नातः, etc.**

VīraM., तीर्थ-प्रकाश, p. 40 ; v. r. जपेत्तत्तीर्थमोदने ।

**P. 122, ll. 18-19. सौमुख्याद्यतिसम्प्रीति॰ etc.**

CaturVC., दान-खण्ड, p. 15.

**P. 124, ll. 11-12. भवन्ति निर्विषाः सर्पाः, etc.**

VīraM., तीर्थ-प्रकाश, p. 360, "दान-धर्मे" ; v. r.........सर्व-पापैः प्रमुच्यते ; TirthaC., p. 198.

**P. 114, ll. 13-14. वर्तमानमतीतञ्च, etc.**

VarṣaKK., p. 534, "भविष्ये" ।

**P. 125, ll. 2-3. लावण्येनेष्ट-विषयैः, etc.**

MahBh., 13. 26. 23.

**P. 125, ll. 9-10. सप्तावरान् सप्त परान् , etc.**

MahBh., 13. 26. 62 ; VarṣaKK., p. 534 ; v. r. इमांस्तारयते ; KṛtyaSS., p. 230.

**P. 126, ll. 5-6. मुहुर्मुहुः सदा पश्येत् , etc.**

VarṣaKK., p. 534 ; v. r. यदा पश्येत् स्पृशेचापि...तदाप्नोति नरः ।

**P. 127, ll. 9-10. मनोवाक्कायजैः पापैः, etc.**

Cp. SkanP., काशी-खण्ड, 27. 16. p. 2216.

**P. 128, ll. 14-15. यत् फलं जायते पुंसां, etc.**

PrāyT., p. 92, ll. 12-13; v. r. यत् पुण्यं जायते...।

**P. 127, ll. 12-13. ममैव परमा मूर्ति० etc.**

SkanP., काशी-खण्ड, 27. 7. p. 2215; v. r....सा परा मूर्तिः ।

**P. 128, ll. 3-5. प्रणमेत् प्रातरुत्थाय, etc.**

VarṣaKK., p. 534 ; v. r. पुण्य-जलां शुभाम् । धर्मार्थ-काम-मोक्षाणां भाजनं स्यान्न संशयः । VīraM., तीर्थ-प्रकाश, p. 363, v. r....पुण्य-जलां शुभां...।

**P. 128, ll. 14-15. अभक्त्यापि महापापी, etc.**

VīraM., तीर्थ-प्रकाश, p. 364, v. r....संस्पृष्टो दहत्येव हि पावकः । VarṣaKK., p. 534, only the first line ; v. r....शुचिर्भवेत् ।

Pp. 129, l. 10—135, l. 7. तीर्थेषु ब्राह्मणं नैव, etc.

Identical with Tīrtha-cintāmaṇi, p. 10. l. 18—p. 17, l. 14, except 13, l. 21—p. 14, l. 7.

**P. 129, ll. 10-17. तीर्थेषु ब्राह्मणं नैव, etc.**

PadmaP., सृष्टि-खण्ड, 34. 209—212 and 215-16 (a) and 17 (b.) p. 420 : v. r., तीर्थे तु......कथञ्चन।......भोज्यन्तं मनुरब्रवीत्... ऋषिभिर्दृष्टं पिन्याकेनेङ्गुदेन वा।...श्राद्धन्तत्र तु कर्त्तव्यं...। स्वधान्तु गृध्राः काका वा नैव दृष्ट्वा हरन्ति ते। श्राद्धं तत्तैर्थिकं प्रोक्तं पितॄणां तृप्तिदं परम्। ......अकालेऽप्यथ काले वा। तीर्थे श्राद्धं......प्राप्तैरेव सदा स्नानं...... These verses are also found in pp. 245-46 of this work. For the verse पिण्ड-दानं ततः शस्तं not found in p. 129, see ŚrāddhaV. of Rudradhara, pp. 14-15. ब्राह्मणान्नैव...कदाचन... भोज्यन्तं...ऋषिभिर्दृष्टं...। (additional line: देयं तु तिल-पिन्याकं शक्तिमद्भिर्नरैः सदा; see p. 245 of this work)...श्राद्धन्तु...श्राद्धं तत्तैर्थिकं ज्ञेयं...(additional line: पिण्ड-दानं ततः शस्तं पितॄणाञ्चाति-वल्लभम्, p. 246)...विलम्बो नातिकर्त्तव्यो न च...। VidhāP., vol. II. pp., 779-80 : v. r....कदाचन...भोजयेत्। श्राद्धं तीर्थेषु कर्त्तव्यं ...दृष्टि-हृतञ्च तत्। काले वाऽप्यथवाऽकाले...प्रकर्त्तव्यं पितॄणाञ्चैव तर्पणम्। (additional line—पिण्ड-दानञ्च तच्छस्तं पितॄणामतिवल्लभम्)...न च विघ्नं...। CaturVC., श्राद्ध-कल्प, pp. 1568-69-70, (p. 69)...परीक्षेत कथञ्चन......भोजयेन्मनु-शासनात्......श्राद्धं तत्र तु कर्त्तव्यं......(p. 70) श्व-ध्वाङ्क्ष-गृध्र-काकाद्या घ्नन्ति दृष्ट्वा न तत्क्रियाः। (additional reading here: पिण्ड-दानं तथा शस्तं पितॄणाञ्चातिवल्लभम्)...क्षिप्रं समाचरेत्। पिण्ड-दानं स्यात्...पिन्याकेनैङ्गुदेन वा (additional line here: पिन्याकेन तिलानां वा भक्तिमद्भिर्नरैः सदा); also p. 924; VīraM., तीर्थ-प्रकाश, p. 73, v. r. ब्राह्मणान्नैव परीक्षेत कदाचन...भोज्यन्तं...दृष्टि-हृतञ्च तत्...तुष्टि-कारकं...तीर्थे श्राद्धं......(additional reading: पिण्ड-दानं etc. as given in VidhāP.)...न च विघ्नं...। SmṛtiC., श्राद्ध-काण्ड, p. 452, "मत्स्य-पुराण", verses not in the same order as in

the GV., v. r....तीर्थे तु ब्राह्मणान्...कथञ्चन...भोजयेन्मनु-शासनात्... पिण्ड-दानं स्यात्...पिन्याकेनेङ्गुदेन वा (additional line here: पिन्याकेन तिलानां वा तल सद्भिर्नरैः सह )...श्व-ध्वाङ्क्ष-गृध्र-कङ्काद्या घ्नन्ति दृष्ट्वा न ते क्रियाः। ŚrāddhaC., p. 10, l. 10 f. 21, ll. 6-7 ; and pp. 141-42, ll. 17-18 ; NirS., pp. 360, l. 26, 361, ll. 5-6 ; KālV., vol. II. p. 407....तीर्थ-श्राद्धे सदा (additional line: पिण्ड-दानं, etc.) ŚrāddhaM., p. 123, only one verse, शक्तुभिः पिण्ड-दानञ्च, etc. ŚrāddhaKK., p. 34 and p. 268. TirthaC., p. 10 *These verses have again been given in this work in pp. 245-246.*

**P. 129, ll. 13-14. श्राद्धञ्च तत्र कर्तव्यं, etc.**

PrāyT., p. 73, ll. 7-8. KṛtyaSS., p. 215. TirthaC., p. 11

**P. 129-130-131, ll. 15,—अकालेऽप्यथवा काले, etc.**

cf. ViraM., तीर्थ-प्रकाश, pp. 75-76 (only the prose portions) and ŚrāddhaV., p. 15 (only cūrṇakas) PrāyT., p. 73, ll. 4-6 ; v. r.---पिण्ड-दानन्तु तच्छस्तं पितॄणामतिदुर्लभम्।...नैव विघ्नं समाचरेत्। KṛtyaSS., p. 215. TirthaC., p. 10.

**P. 132, ll. 1-12.**

Cf. ŚrāddhaV., p. 15, ll. 9-23 ; ViraM., तीर्थ-प्रकाश, p. 48, ll. 3-10.

**P. 132, ll. 14-15. मुण्डनञ्चोपवासश्च, etc.**

SkauP. आवन्त्य-खण्डे रेवा-खण्ड, vv. 31f-32a, p. 3644. TirthaC., p. 140, PrāyT., p. 76, ll. 18-19. VidhāP., p. 742; v. r., वर्जयित्वा कुरुक्षेत्रं...गयां ; ViraM., तीर्थ-प्रकाश, p. 47 ; v. r. वर्जयित्वा कुरुक्षेत्रं...गयां ; NirS., p. 359, l. 24, v. r. वर्जयित्वा कुरुक्षेत्रं विशालां विरजं गयाम् ; ŚrāddhaC., p. 139, v. r. वर्जयित्वा कुरुक्षेत्रं...गयाम्।

**P. 132, ll. 7-9. तीर्थमधिगम्य, etc.**

ViraM., तीर्थ-प्रकाश, p. 48, l. 3; cf. VidhāP., third stavaka, p. 843, ll. 1-2.

**P. 133, ll. 3-6. भौमानामपि तीर्थानां, etc.**

SkauP., काशी-खण्ड, पूर्वार्ध, vv. 42b-44, p. 2086; v. r.... केचिन्मेध्यतमाः स्मृताः।...प्रभावाद्...परिग्रहान्...। ViraM., तीर्थ-प्रकाश, p. 10, v. r., केचिन्मेध्यतमाः...पृथिव्या उद्देशाः...प्रभावादद्भुताद्...परिग्रहान्मुनीनाञ्च। TirthaC., p. 115, v. r. केचिन्मुख्यतमाः...सलिलस्य च तेजसः...परिग्रहान्मुनीनाञ्च...।

**P. 133, ll. 7-13.**

Cp. ViraM., तीर्थ-प्रकाश, p. 54, l. 13 f.; VidhāP., third stavaka, p. 754, ll. 8-12.

**P. 134, ll. 4-5. वस्तुतस्तु गङ्गा-मुण्डन-विषयक-वाक्यानां, etc.**

Cp. ViraM., तीर्थ-प्रकाश, p. 51, l. 20 f.

**P. 134, ll. 6-7. गङ्गायां भास्कर-क्षेत्रे, etc.**

PrāyT., p. 77, ll. 9-5; v. r. मातापित्रोर्मृते गुरौ।

**P. 134, ll. 16-18. यावन्ति नख-रोमाणि**

PrāyT., गङ्गा-माहात्म्य, p. 78, ll. 7-9. TirthaC., p. 17 KrtyaSS., p. 217, v. r....ब्रह्मलोके...।

**P, 135 ll. 1-7. सर्व-तीर्थस्येति, etc.**

Cp. ViraM., तीर्थ-प्रकाश, p. 34, l. 17 f. and p. 53, l. 13 f.

**P. 135, ll. 8-9. गङ्गाम्भःकण-दिग्धस्य, etc.**

TirthaC., p. 191.

**P. 135, ll. 12-13. अप्रतिष्ठाश्च ये केचित्, etc.**

VīraM., तीर्थ-प्रकाश, p. 360 ;

**P. 135, ll. 15-16. सार्धं हस्त-शतं यावत्, etc.**

VīraM., तीर्थ-प्रकाश, p. 362. "गङ्गावाक्यावल्यां ब्रह्माण्डे।" PrāyT., p. 88, ll. 13-14, "ब्रह्म-पुराणे"। DānaM., p. 8, l. 20, only the first line quoted. VidhāP., third stavaka, p. 844, only the first line quoted. VarṣaKK., p. 533 ; all the three lines given in our works are found here—; no other work consulted by me quotes the third line.

**P. 135, ll. 1-3. तीराद् गव्यूति-मात्रन्तु, etc.**

TīrthaC., p. 266: last line not quoted here. VidhāP., third stavaka, p. 844, only the first line found here ; DānaM., p. 8, l. 21. only the first line ; VarṣaKK., p. 533, third line given as follwos "यत् किंचित् कुरुते कर्म तदक्षयमुदाहृतम्"। DānaC., p. 2b, l. 5, only the first line. PrāyT., chap. गङ्गा-माहात्म्य, p. 89, ll. 1-3 ; v. r....अत्रस्थास्तिदिवं...।

**P. 136, ll. 5-7. गङ्गा-सीमां न लङ्घन्ति, etc.**

VidhāP., p. 844, third stavaka, v. r. तट-द्वये ; VīraM, तीर्थ-प्रकाश, p. 362, v.r....न लङ्घन्ते। TīrthaC., p. 267.

**P. 136, ll. 8-9. भाद्र-कृष्ण-चतुर्दश्यां, etc.**

PrāyT., p. 88, ll. 12-14 ; DānaM., p. 8, l. 18 ; v. r....भाद्र-शुक्ल...; DānaC., p. 2b, l. 7, v. r. भाद्र-शुक्ल-चतुर्दश्यां...; VīraM., तीर्थ-प्रकाश, p. 392, v. r., तदन्यत्तीरमुच्यते ; VidhāP., third stavaka, p. 844 ; VarṣaKK., p. 533. TīrthaC., p. 266.

**P. 136, ll. 10-13, प्रवाहमवधिं कृत्वा, etc**

VīraM., तीर्थ-प्रकाश, p.362 "ब्राह्मे", v.r. तत्र नारायणः, etc. given follows, अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठ-गतैरपि ; the VīraM. states that the reading of the third line as given in the GV. is found in the BrahmāṇḍaP. VidhāP., third stavaka, p. 843, l. 3 given as follows—न तत्र प्रतिगृह्णीयात् प्राणैः कण्ठ-गतैरपि । TīrthaC., p. 266, v. r. as in VidhāP. DānaC., p. 2b, l. 6, only the first line given; VarṣaKK., p. 533, v. r. तत्र नारायणः...। PrāyT., p. 88, ll. 2-4, v. r. अत्र नारायणः...अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठ-गतैरपि । TīrthaC., p. 266.

**P. 136, ll. 16-17. अटवी पर्वताः पुण्याः, etc.**

ParāM.: I. II, p. 303, "आदि-पुराण", v. r.,...नदी-तीराणि यानि च, VīraM., श्राद्ध-प्रकाश, p. 148, v. r. अटव्यः......नदी-तीराणि । MadanaP., p. 485, "पुराणे", v. r. अटव्यः......नदी-तीर्थानि । ŚrāddhaM., p. 30, "आदित्य-पुराणे", v. r. नदी-तीराणि । SmṛtiSār., p. 175, ll. 7-8, v. r....नदी-तीराणि ।

**P. 137, ll. 4-6. यत्र गङ्गा महाराज, etc.**

Cp. MahBh. 3, 85, 97, VidhāP., third stavaka, p. 845, v. r....समन्तात्तु त्रि-योजनम् (see the corresponding explanation) TīrthaC., p. 267, v. r....समन्तात्तु द्वियोजनम् ।

**P. 137, ll. 9-12. अत्र हस्त-चतुष्टयाभ्यन्तरे, etc.**

DānaM., p. 8, l. 23 f: VīraM., तीर्थ-प्रकाश, p. 362, l. 24 f: VidhāP., p. 845, l. 1 f: TīrthaC., p. 267, l. 8; language identical or almost identical.

**P. 137, ll. 13-16. तीर्थे न प्रतिगृह्णीयात्, etc.**

TīrthaC., p. 267. KṛtyaSS., p. 218, only the first verse

quoted here. VīraM., तीर्थ-प्रकाश, p. 89, v. r....चाप्रमत्तो भवेन्नरः ...यस्तीर्थं प्रतिगृह्णाति। Only the first verse and the last line are found in the PadmaP., आदि-खण्ड, Ānandāśrama ed., 42. 16.17a, p. 790

**P. 137, ll. 18-20. अप्यकार्य-शतं कृत्वा, etc.**

PrāyT., chap., गुरु-प्रायश्चित्तेन लघु-पाप-नाशः, p. 70, ll. 7-9. "महाभारते", v. r. यद्यकार्य-शतं कृत्वा कृतं...। VarṣaKK., p. 535, v. r....गङ्गावगाहनं...। SmṛtiSār., p. 352, v. r ......कृतं......तृण-राशिमिवानलः।

**P. 138, ll. 1-2. अपहृत्य तमस्तीव्रं, etc.**

VīraM., तीर्थ-प्रकाश, p. 359, v. r. तथाऽपहृत्य पाप्मानं। TīrthaC., p. 204, v. r....पाप्मानं...।

**P. 138, ll. 6-7. भक्त्या गङ्गावगाहस्य, etc.**

VarṣaKK., p. 535, v. r....स्वर्ग-मोक्षौ फलं तस्यैतेवमाहुर्मनीषिणः।

**P. 138, ll. 9-10. सकृद् गङ्गावगाहेन, etc.**

VarṣaKK., p. 535.

**P. 139, ll. 7-8. अश्रद्धया हृतं सर्वं, etc.**

PadmaP., स्वर्ग-खण्ड, 14. 68 and उत्तर-खण्ड, 126. 25.

**P. 139, ll. 8-9. श्रद्धा भक्तिश्च काम्यानां, etc.**

SmṛtiR., p. 132, ll. 33-34, v. r. श्रद्धा-भक्तिश्च दानानां वृद्धि-क्षय-करे हि ते। CaturVC., दान-खण्ड, p. 13, v. r....वृद्धि-क्षय-करे स्मृते। The first line of the verse is, as given in the CaturVC., नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम्।

**P. 140, ll. 1-3. अप्सु नारायणं देवं, etc.**

VarṣaKK., p. 535; PrāyT., p. 93, ll. 10-12.

**P. 140, ll. 4-5. नैर्मल्यं भाव-शुद्धिश्च, etc.**

VīraM., आह्निक-प्रकाश, p. 230, "पद्म-पुराण", v. r ...न जायते... तस्मान्मनोविशुद्ध्यर्थं ...। MatP., 102. 1, p. 306 ; v. r. तस्मान्मनो... AhnikaT., chap. स्नान, p. 65, ll. 8-9, "पद्म-पुराण" ; v. r....विना स्नानं न जायते। तस्मान्मनोविशुद्ध्यर्थं ...। PadmaP., सृष्टि-खण्ड 20. 142.

**P. 140, ll, 7-8. नृणां पाप-कृतां तीर्थे, etc.**

See GV., p. 115, ll. 11-12.

**P. 140, ll. 9-10. यस्य हस्तौ च पादौ च, etc.**

See GV., p. 114, ll. 5-6. VidhāP., third stavaka, p. 745. "शङ्खः" । BrahmaP., 25. 2, p. 120.

**P. 140, ll.11-12. चित्तमन्तर्गतं दुष्टं, etc.**

BrahmaP., 25.8, p. 120. SkanP., काशी-खण्ड, 6.38, p. 2086, v. r. तीर्थ-स्नानान्न... । SmṛtiR., p. 57, l. 31, v. r. शतशोऽथ...। VidhāP., p. 746.

**P. 141, ll. 10.12. सर्व एव शुभः कालः, etc.**

SkanP., काशी-खण्ड, v. 69, p. 2219; KālaTV., p. 190, v. r... सर्वो देशस्तथा...।

**P. 141, ll. 15-16, स्नातस्य सलिले यस्याः, etc.**

ViṣṇuP., part II, 8. 111.

**P. 142, l. 2. अनेक-जन्म-सम्भूतं, etc.**

VarṣaKK., p. 536;

**P. 142, ll. 10-12. अयञ्च स्नान-विधिः, etc.**

VīraM., आह्निक-प्रकाश, p. 332, ll. 10-11; language identical with that of GV.

**P. 142, ll. 16-18. तूष्णीमेवावगाहेत, etc.**

VidhāP., third stavaka, p. 254, v. r. आचम्य विधिवत् पश्चात्ततः स्नानम्...। ParāM., I. I, p. 279, "योगि-याज्ञवल्क्य", v. r. आचम्य प्रयतः पश्चात् स्नानं''' ।

**P. 142, ll. 19-20. अनुद्धृतैरुद्धृतैर्वा, etc.**

BhavP., उत्तर-पर्व, chap. 123, v. 2, p. 485(a); PadmaP., सृष्टि-खण्ड, 20. 143; VīraM., आह्निक-प्रकाश, p. 230.......स्नानं समाचरेत् ......मूल-मन्त्रेण धर्मवित् । VidhāP., third stavaka, p. 254, only the second half quoted. v. r. तीर्थं तु कल्पयेत् ।

**P. 143, ll. 1-2. नमो नारायणायेति, etc.**

BhavP. उत्तर-पर्व, 123. 3, p. 485 (a); PadmaP., सृष्टि-खण्ड, 20. 144; VīraM., आह्निक-प्रकाश p. 230.

**P. 143, ll. 3-4. समौ च चरणौ कृत्वा, etc.**

BhavP., ब्राह्म-पर्व, 3. 58b, p. 8a; v. r. सुसमौ चरणौ कृत्वा...।

**P. 143, ll. 5-6. दक्षिणन्तु करं कृत्वा, etc.**

NṛsimhaP., 58. 74, p. 213; first line not found in it. VīraM., आह्निक-प्रकाश, p. 76.

**P. 143, ll. 7-9, ब्राह्मेण विप्रस्तीर्थेन, etc.**

VīraM., आह्निक-प्रकाश, p. 36; SmṛtiR. p. 36, l. 25; SmṛtiC., आह्निक-काण्ड, p. 253; SmṛtiSār., p. 311, l. 12.

**P. 143, ll. 9-10. विप्र इति, etc.**

According to VīraM., आह्निक-प्रकाश, p. 77, l, 6, this passage occurs in the आचारादर्श of श्रीदत्त ।

**P. 143, ll. 12-13. ब्राह्मेणाऽऽचमनं शस्तं, etc.**

BrahmaP., 221. 99, p. 888; v. r....प्राजापत्यञ्च तेन च।

**P. 143, l. 14. अत्र सम्भवे, etc.**

VīraM., आह्निक-प्रकाश, p. 77, ll. 14-16 "बहुषु निबन्धेषूक्तम्"।

**P. 144, ll. 2-3. हृत्-कण्ठ-तालुगाभिश्च, etc.**

CaturVC., परिशेष-खण्ड, श्राद्ध-कल्प, p. 986, "याज्ञवल्क्य विष्णु", v. r. शुध्येयुः। VidhāP., third stavaka, p. 159. VīraM., आह्निक-प्रकाश, p. 71. SmṛtiR., p. 37, l. 4. SmṛtiC., आह्निक-काण्ड, p. 256. SmṛtiSār., p. 267, l. 4.

**P. 144, ll. 4-6. अधः पाणि-नखाग्रेण, etc.**

SmṛtiC., आह्निक-काण्ड, p. 272, v. r....नखाग्रेषु...यस्तु ब्राह्मणः...। VīraM., आह्निक-प्रकाश, p. 71. cf. ParāM., I. 1, p. 247.

**P. 144, ll. 6-7. प्रक्षाल्य पाणी पादौ च, etc.**

VīraM., आह्निक-प्रकाश, p. 62, v. r. पादौ पाणी च...। DakṣaS., 2. 14(a), p. 423; v. r....प्रक्षाल्य पादौ हस्तौ च...।

**P. 144, ll. 7-8. न नष्टाभिरफेनाभिः, etc.**

CaturVC., श्राद्ध-कल्प, p. 983, v. r. अनुष्णाभिः,...VīraM., आह्निक-प्रकाश, p. 66, "मनुः", v. r. अद्भिस्तीर्थेन धर्मवित्। KūrP., उत्तर-भाग, chap. 13, v. 8, p. 268.

**P. 144, ll. 8-10. शिरः प्रावृत्य कण्ठं वा, etc.**

KūrP., उत्तर-भाग, chap. 13, v. 9, p. 268. VīraM., आह्निक-प्रकाश, p. 93. cf. ParāM., I. 1. p. 247. SmṛtiR., p. 38, l. 34, v. r. विमुक्त-शिखोऽपि वा। CaturVC., श्राद्ध-कल्प, p. 979.

**P. 144, ll. 12-13. इत्येमद्भिराजानु, etc.**

VīraM., आह्निक-प्रकाश, p. 64.

**P. 144, l. 14. आ जानुभ्यां पादौ, etc.**

Cp. ViraM., आह्निक-प्रकाश, p. 65, "आ जङ्घाभ्यां पादौ", etc.

**P. 144, l. 15. जानुभ्यामूर्ध्वमाचम्य, etc.**

ViraM., आह्निक-प्रकाश, p. 92.

**P. 144, ll. 16-17. अन्तरुदगाचान्तः, etc.**

SmṛtiC., आह्निक-काण्ड, p. 269 and p. 272. SmṛtiR., p. 37, l. 18.

**P. 145, ll. 1-2. पाद-प्रक्षालनोच्छिष्टेन, etc.**

ViraM., आह्निक-प्रकाश, p. 71, v. r. पाद-प्रक्षालनोच्छेषेण......। SmṛtiC., आह्निक-काण्ड, p. 270, v. r. same as before. CaturVC., श्राद्ध-कल्प, p. 977.

**P. 145, ll. 4-5. शिरः प्रावृत्य कण्ठं वा, etc.**

See p. 144 of GV.

**P. 145, ll. 5-7. गायत्र्या तु शिखां बद्ध्वा, etc.**

ĀhnT., chap. आचमन, p. 18, ll. 11-13, "शिखा-बन्धे विशेषमाह ब्रह्म-पुराणम्"।

**P. 145, ll. 7-9. कनिष्ठा-देशिन्यङ्गुष्ठ, etc.**

VidhāP., third stavaka, p. 157. SmṛtiR., p. 36, l. 29. SmṛtiC., आह्निक-काण्ड, p. 272. GaruḍaP., p. 220.

**P. 145, ll. 9-13. अङ्गुष्ठ-मूलान्तरतो etc.**

KūrP., उत्तर-भाग, chap. 13, vv. 16-18, v. r. अङ्गुष्ठ-मूल-रेखायां तीर्थं ब्राह्ममिहोच्यते...पितृ-तीर्थमनुक्रमात्।

**P. 145, ll. 14-15. सोपानत्को जलस्थो वा etc.**

SmṛtiR., p. 41, l. 8, v. r. ......मुक्त-केशोऽपि वा पुनः। Our missing portion is found in the SmṛtiR...."वस्त्रे ग्राऽऽवेष्ट्य वा

शिरः" । ParāM., I. 1, p. 247, v. r....मुक्त-केशोऽपि वा नरः ; our missing portion is found as follows :—"वस्त्रे शाऽऽवध्य वा शिरः" । CaturVC., श्राद्ध-कल्प, p. 979, v. r....मुक्त-केशोऽपि वा पुनः ; and the missing portion is given as "वस्त्रे शाऽऽवेष्ट्य वा शिरः" ।

**P. 145, ll. 15-18. न गच्छन् न शयानश्च, etc.**

CaturVC., श्राद्ध-कल्प, p. 979.

**P. 145, ll. 21. न शूद्राशुच्येक पाण्यावर्जितेन, etc.**

VīraM., आह्निक-प्रकाश, p. 67.

**P. 145, ll. 22-23. मूत्र-पुरीषे कुर्वन्, etc.**

BaudhDhS., I. 4. 22, p. 430 of SmṛtiSam. ; VīraM., आह्निक-प्रकाश, p. 40.

**P. 146, ll. 4-8. संहत्य तिसृभिः पूर्वम्, etc.**

ParāM., p. 237 ; v. r. संहतानिस्त्रिभिः......स्पृष्ट्वा त्वनन्तरं...... अनामिकाभ्यां तु...ततः परम् । SmṛtiC., आह्निक-काण्ड, p. 257, first line not quoted here ; v. r....नाभिं कनिष्ठाङ्गुष्ठाभ्यां...। CaturVC., परिशेष-खण्ड, p. 998, v. r....चक्षुः श्रोत्रं......नाभिं कनिष्ठाङ्गुष्ठेन......।

**P. 146, ll. 11 ff. संवृत्याङ्गुष्ठ-मूलेन, etc.**

Cp. GaruḍaP., पूर्व-खण्ड, 217. 38, p. 513.

**P. 146, ll. 17. खानि इन्द्रियाणि उपस्पृशेत्, etc.**

GauDhS., I. 41. The rule is given as खानि चोपस्पृशेच्छीर्षण्यानि मस्करि in his bhāṣya quotes Manu, त्रिराचामेदपः पूर्वं द्विरुन्मृज्यात्ततो मुखम् । खानि चोपस्पृशेदद्भिरात्मानं हृदयं शिरः ॥ इति । See ManuS., 5. 139, p. 206.

